**आरभ्य कर्माणि गुणान्वितानि भावांश्च सर्वान् विनियोजयेद्यः**
**तेषामभावे कृतकर्मनाशः कर्मक्षये याति स तत्त्वतोऽन्यः ॥ ४**

**आदिः स संयोगनिमित्तहेतुः परस्त्रिकालादकलोऽपि दृष्टः ।**

---

लक्षणयोगं प्राप्य प्रारब्धत्वगुणयुक्तानि कर्माण्यवलम्ब्य वर्तमानान् सर्वान् भा
कामान् स्वस्मै विनियोजयति=भुङ्क्ते । स **तेषां** कर्मफलभोगानामवसाने फ
वर्गितया कर्मणां नाशात्, 'तस्य तावदेव चिर' मित्युक्तरीत्या कर्मक्षये
**याति** प्राप्नोति । स तत्त्वतः परमात्मनोऽन्य एव । अतो नैक्यशङ्का क
भावः । (३.

परमात्मोपासनमपि स्वात्मोपासनपूर्वकं कर्तव्यमित्याह **आदिरिति** ।
पूर्वमन्त्रोक्तजीवः **संयोगे** समीचीनपरमात्मयोगे तत्प्राप्तौ आदिकारणम् — प्र
हेतुरिति यावत्—कालत्रयपरिच्छिन्नात् परत्वेन भिन्नत्वेन निरवयवत्वेन शास्त्रह

---

गुणैश्च रागद्वेषादिभिः सहायैः व्यष्टिं कुरुते देव इति । **विज्ञानभगवतो** व्याख्यानशैली प्रायो
द्भाष्यानुरोधिनी । **तत्कर्मेत्यस्य** तदर्थं कर्म **तत्कर्म** भगवदाराधनरूपं कर्मेति तत्र व्याख्या
एवमपि सुवचम्—तत् पूर्वोक्तं पृथ्व्याप्त्यादिजगद्विवर्तोपयोगि भोगप्रदं काम्यं **कर्म** बहोः का
कृत्वा, **भूयः** पश्चात् तादृशकर्मकारणादात्मानं विनिवर्त्य, आत्मतत्त्वस्य ब्रह्मतत्त्वेन योगं शेषश
भावात्मकं बुद्ध्वा, अन्यविधानि सात्त्विकत्यागरूपगुणान्वितानि आरभ्य सर्वं तत्रोपयोजयेत्
इत्येवम् । कश्चित्तु, 'एकेन द्वाभ्यां त्रिभिरष्टभिर्वा जन्मभिर्यथायथं तत्तद्भाग्यपरिपाककाल
रोधेन' इति **एकेनेत्या**द्यंशं व्याख्याति । **कृतकर्मनाश** इत्यस्य **कृतः** एवं निष्पादितः कर्मन
येनेति विग्रहेण **स** इत्येतद्विशेषणत्वं भाव्यम् । **स तत्त्वतोऽन्य** इत्यनेन, एवमज्ञो ः
सांसारिकं कर्म कृत्वा क्लेशमनुभूय विरज्य सत्कर्मकरणेन भगवत्तत्त्वमाराध्य मुक्तिं प्राप्तुं प्रयस
पुरुषस्य कथं जगत्कारणतत्त्वतासंभव इति प्रदर्शितमिति ध्येयम् । (३. ४.)

**आदिरि**त्यादेः परमात्मपरतया योजना एवं भवेत्—'संयोग एषां न त्वात्मभावा
इति प्रागुक्ततया संयोगनिमित्ततयाऽभिमतानामप्यादिहेतुर्देव एव कालत्रयपरिच्छिन्नादन्योऽ
वयव इति । तथासति तं देवं पूर्वमुपास्य, तदनन्तरं विश्वधाम आत्मस्थं ज्ञात्वेति उपरित
वाक्यार्थानन्वयः प्रसजति । अतः **आदिरिति** मन्त्रः पूर्वप्रकृतजीवपरतयैव व्याख्यात

**तं विश्वरूपं भवभूतमीड्यं देवं स्वचित्तस्थमुपास्य पूर्वम् ॥ ५ ॥**
**स वृक्षकालाकृतिभिः परोऽन्यो यस्मात् प्रपञ्चः परिवर्ततेऽयम् ।**
**धर्मावहं पापनुदं भगेशं ज्ञात्वाऽऽत्मस्थममृतं विश्वधाम ॥ ६ ॥**

---

कर्मवशादनन्तशरीरं **भवभूतं** भवं संसारं **भूतं** प्राप्तम् — संसारिणमिति
वत् — **ईड्यं** स्तुत्यम् — अपहतपाप्मत्वादिगुणकमिति यावत् — अत एव
वं द्योतमानं स्वप्रकाशज्ञानानन्दरूपं स्वहृदयस्थं प्रथमत उपास्य,

स वृक्षेति । यस्मादयं चिदचित्प्रपञ्चः परिवर्तते, स वृक्षकालाकृतिभ्यः
ः उत्कृष्टः — **वृक्ष**शब्देन छेदनार्हप्रकृतिप्राकृतमुच्यते — **आ समन्तात् कृतिः**
ो यस्येति **आकृतिः** कर्ता जीवः । प्रकृतिकालजीवेभ्य उत्कृष्ट इत्यर्थः ।
नोत्पत्तिप्रतिबन्धकपापानि अपनुद्य तदनुकूलपुण्यप्रवर्तकम्, 'ऐश्वर्यस्य समग्रस्य
र्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा' इत्युक्तानां ज्ञानादी-
मीश्वरं विश्वस्य **धाम**भूतमाधारभूतं मरणाद्यवद्यशून्यं स्वात्मनि अन्तर्यामितया वर्तमानं
त्वा मुक्तो भवतीत्यर्थः ।　　(५+६)

---

ोपनिषदि (१-१७.) 'ब्रह्मजज्ञं देवमीड्यं विदित्वा' इत्यत्र, "जीवात्मानमुपसकं ब्रह्मात्म-
त्वेनावगम्य" इति **भाष्यकृता** व्याख्यानात् तद्रीत्या इहापि **ईड्यं देव**मिति ब्रह्मात्मकत्व-
क्षाऽपि भवेत् । (५)

एवं स्वभावकालकर्मपञ्चभूतजीवेभ्यः प्रस्तुतेभ्योऽन्यः परमात्मा ज्ञातव्य उच्यते **स वृक्ष-
लाकृतिभि**रिति । **वृक्षेति** 'ऊर्ध्वमूलोऽवाक्छाख एषोऽश्वत्थः सनातनः' इति कठोक्त
भिज्ञाप्यते । **आकृति**शब्दस्याऽऽकाररूपार्थविवक्षायां वैयर्थ्यात् प्रकृतजीवपरतया संभवति
क्ये तत्त्यागायोगाच्च तदुचितमर्थमाह **आ समन्ता**दिति । तृतीया, 'अन्यदेवाहुर्विद्यये'
दाविव पञ्चम्यर्था । **ज्ञात्वे**त्यस्य उत्तरमन्त्रे **विदामे**त्यत्रान्वयो न भवति । ज्ञानवेदनकर्मणो-
त्वेन ज्ञानवेदनयोरप्यैक्यात् क्त्वाप्रत्ययानुपपत्तेः । न च ज्ञानमिदं वाक्यार्थज्ञानमात्रम्; वेदनं
ध्यानमिति वाच्यम् — वाक्यार्थज्ञाने जीवोपासनानन्तरभावित्वनियमाभावेन **पूर्वमुपास्ये**त्युक्ता-
र्थानन्वयात् । अतो **मुक्तो भव**तीत्यध्याहृत्य पृथग्वाक्यकरणम् ।

ननु **आदि**रित्यादि सर्वं परमात्मपरमेवास्तु । तत्र स्वचित्तस्थत्वेन तस्य (विग्रहविशिष्टस्य)
ासनं पूर्वमुच्यते । अथ आत्मस्थत्वेन ध्यानमुक्तम् । अथ भुवनेशत्वेन सर्वविभूतिविशिष्टतया
नं परज्ञानरूपं मुक्तिप्राक्कालिकं प्रार्थ्यते । तथाच मुक्तो भवतीति मा भूदध्याहारः । अथवा
**त्वे**ति ज्ञानं आलम्बनसंशीलनरूपमस्तु; **विदामे**ति चोपासनमिति चेत् — किमनेन? यत्र
ग्रवम्, तदाद्रियतां सम्यग् विमृश्य । (६)

**तमीश्वराणां परमं महेश्वरं तं देवतानां परमञ्च दैवतम् ।**
**पतिं पतीनां परमं परस्ताद् विदाम देवं भुवनेशमीड्यम् ॥ ७**

**न तस्य कार्यं करणञ्च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते ।**
**पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥ ८**

**न तस्य कश्चित् पतिरस्ति लोके न चेशिता नव च तस्य लिङ्गम्**
**स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः ॥ ९**

**यस्तन्तुनाभ इव तन्तुभिः प्रधानजैः स्वभावतः ।**

---

**तमीश्वराणा**मिति । **विदाम**ेति ज्ञानप्रार्थना । शिष्टं स्पष्टम् । ( ७

न **तस्ये**ति । **कार्यं** शरीरम् । **करणम्** इन्द्रियम् । ज्ञानबलाभ्यां सहि सृष्टिसंहारादिलक्षणक्रिया **ज्ञानबलक्रिया** । शिष्टं स्पष्टम् । ( ८

**न तस्य** कश्चिदिति । **लिङ्गं** ज्ञापकहेतुः । **करणाधिपो** जीवः । शे मतिरोहितार्थम् । ( ९

**यस्तन्तुनाभ** इति । लूताख्यः कीटविशेषः स्वसंनिहितजन्तुविशेषं यः तन्तुभिरावृणोति , एवं प्रकृतिजैः प्राकृतैः तत्त्वैः **स्वभावतः** स्वेच्छात

---

**महेश्वर**मिति न रूढ्यर्थरुद्रविवक्षासंभवः ; तदा पारम्यानन्वयात् । देवतामध्ये परमदेवतात्वस्य पतिमध्ये परमपतित्वस्य चैव ईश्वरमध्ये परमेश्वरत्वस्यात्र कथ्यमानतायाः साहचर्यबलसिद्धतया परममहेश्वरपदान्तर्गतेश्वरशब्दस्य यौगिकत्वावधारणादिति हि श्रुतप्रकाशिकोक्तमुपरि अनुवदिष्यति । **महेश्वर**मित्यत्र महत्त्वमविवक्षितं वस्तुस्थित्यनुवादमात्रम् । अस्तु वा **ईश्वराणा**मिति पदं महेश्वराणामित्यर्थकम् । ' ईश्वराणां मध्ये परमत्वात् महेश्वरः ; देवतानां मध्ये परमत्वात् दैवतभूतः ; देवतैव दैवतमिति व्युत्पत्त्या अस्य देवतात्वं नियतम् ; अन्येषां तु मनुष्यादिकिञ्चिदपेक्षया देवतात्वम् , उत्कृष्टापेक्षया च तदभाव इति देवतात्वं न नियतमिति वाक्यार्थवर्णनेऽपि महेश्वरपदस्य महांश्चासौ ईश्वरश्च महेश्वर इति योगार्थ एव विवक्षितो भवतीति ध्येयम् । (७)

**यस्तन्तुनाभ इवे**ति तन्तुनाभदृष्टान्तेन जन्तूनां स्वात्मनि लयसंपादनायैव तन्तुनाभः तन्तून् निर्माय वितनोति यथा, तथा देवोऽपि अन्ततो जीवानां स्वात्मन्यप्ययरूपमोक्षप्रापणाय स्वशरीरात् प्रधानात् तन्तुतुल्यानि महदादीनि कार्याणि सृष्ट्वा विस्तृणातीति दर्शितम् । (१०)

देव एकः[1] समावृणोति स नो दधाद् ब्रह्माप्ययम् ॥ १० ॥

एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ॥ ११ ॥

एको वशी निष्क्रियाणां बहूनामेकं बीजं बहुधा यः करोति ।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥ १२ ॥

नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् ।

1. स्वमावृणोति. पा०

---

द्गमावृणोति लुप्तज्ञानं करोति [यः ?], स देवोऽस्माकं ब्रह्मणि अप्ययमात्यन्तिकं
करोतु । मुक्तस्य ब्रह्मण्यप्ययो नाम भेदकाकारास्फुरणम् ।	( १० )

**एको देव** इति । सर्वभूतेषु इतराविदिततया वर्तमानः, सर्वव्यापितया
**भूतात्मा**, तच्छरीरेष्वनुप्रविष्टः, कर्मसु प्रेरकः, **चेता** — चिञ् चयने' इति
धातुः — सकलप्रपञ्चनिर्माता, त(अ)थापि गुणत्रयवश्यत्वाभावात् फलाभिसन्धि-
ककर्तृत्वाभावेन [च ?] (?) केवलोदासीनः, ईशः (?), 'अपहतपाप्मा दिव्यो
एको नारायण' इति प्रसिद्धो दिव्यो देव एक एवेत्यर्थः ।	( ११ )

**एको वशीति** । **निष्क्रियाणां** स्वतः प्रवृत्तिरहितानां सर्वचेतनानां
**ी**—स्वाधीनसर्वचेतनवर्ग इति यावत्—एकं जगद्बीजमव्यक्तलक्षणं महद-
ारादिरूपेण यो बहुधा करोति, तं स्वान्तर्यामिणं ये जानन्ति, त एव मुक्ता
न्तीत्यर्थः ।	( १२ )

**नित्य** इति । अनित्यानां चेतनानां बहूनां नित्य एक एव चेतनस्सन्
?] कामान् विदधाति, तज्ज्ञानं मुक्ति [हेतु ?] रित्यर्थः । अत्र नित्यचेतनानाम-
यत्वं धर्मभूतज्ञानसङ्कोचादिधर्मयोगादिति द्रष्टव्यम् । नित्यानां मध्ये नित्यः
अन्तनित्यः, चेतनानां मध्ये चेतनः परमचेतनः इत्यर्थाश्रयणेऽपि न दोषः ।

---

नित्यो नित्यानामित्यत्र नित्यानामिति पदच्छेद एव भगवद्भाष्यकारदर्शितः । तथैव च

**तत् कारणं सांख्ययोगाधिगम्यं ज्ञात्वा देवं मुच्यते सर्वपाशैः**

**न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽय**
**तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभाति ॥**

**एको हँसो भुवनस्यास्य मध्ये स एवाग्निः सलिले संनिविष्ट**
**तमेव विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥**

**स विश्वकृत् विश्वविदात्मयोनिर्ज्ञः कालकालो गुणी सर्वविद्यः**

---

नित्यत्वचेतनत्वतारतम्यञ्च विवक्षाविशेषेण द्रष्टव्यम् । **सांख्ययोगा** सांख्ययोगशास्त्रयोः तात्पर्यविषयभूतम् । 'सांख्यं योगः पाञ्चरात्रं वेदाः तथा । आत्मप्रमाणान्येतानी' त्युक्तेरिति भावः । (

**न तत्रेति** । अयं मन्त्रोऽन्यत्र बहुकृत्वो व्याकृतः ।

**एक** इति । **भुवनस्य** चिदचिरप्रपञ्चस्य मध्ये, पक्षिसंघे राजहंसवत् जमानः । 'यमन्तस्समुद्रे कवयो वदन्ती' ति समुद्रसलिलसंनिविष्टः । स ए अग्रनेता मोक्षप्रदः संसारपाशदाहक इति वाऽर्थः । शिष्टं स्पष्टम् । (

**स विश्वेति** । **विश्वकृत्** सर्वकर्ता, **विश्ववित्** सर्वं प्राप्तः,—विदिर्लाभ इ धातुः—**आत्मयोनिः**—आत्मा योनिः स्थानं यस्य स तथोक्तः । जीवान्तर्यामीत्य **ज्ञः** सर्वज्ञः, **कालकालः** कालस्यापि नियन्ता, स **विद्यः** सर्वविद्याप्र

---

**कठोपनिषदि** एषां व्याख्यानमपि । इह तु, **स नो दद्यात् ब्रह्माप्ययमि**ति जीवा यस्योक्तत्वात् किञ्चिद्रूपेण अनित्यत्वस्य जीवेषु वर्णनसंभवात् पराभिमतस्य अनित्यानामि विभागस्य स्वीकारेऽपि नातीव हानिरिति व्युत्पादनाय प्रकारान्तरेण व्याख्यानमिति ।
**सांख्ययोगाधिगम्यम्** ज्ञानयोगकर्मयोगाभ्यामधिगम्यमित्यप्यर्थः स्यात् । 'सां पृथग्बालाः' इत्यादौ गीतासु तथा प्रसिद्धेः । (१३)

**न तत्र सूर्य** इति मन्त्रः कठवल्ल्यां मुण्डके च श्रूयते । (१४)

प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः ॥ १६ ॥
स तन्मयो ह्यमृत ईशसंस्थो ज्ञः सर्वगो भुवनस्यास्य गोप्ता ।
य ईशेऽस्य जगतो नित्यमेव नान्यो हेतुर्विद्यत ईशनाय ॥ १७ ॥
यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।
तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥ १८ ॥

---

**प्रधानक्षेत्रज्ञपतिः** प्रकृतिजीवयोः शेषी, **गुणेशः** ज्ञानादिषाड्गुण्यपरिपूर्णः, **संसारस्य** प्रकृतिसंबन्धलक्षणस्य मोक्षे च तत्स्थितौ च हेतुरित्यर्थः । (१६)

**स तन्मय** इति । **सः** परमात्मा **तन्मयः** तत्प्रचुरः । तदात्मक एव; नान्यात्मकः । अनन्यप्रेर्य इति यावत् । **अमृतः** असंसारी । **ईशे** ईशनव्यापारे सम्यक् स्थितिर्यस्येति तथोक्तः । **य ईशे** यो नित्यमीष्टे । यस्य चेशनमनन्यहेतुकं **नित्यम्** । मोक्षदशायामप्यनपायीत्यर्थः । शिष्टं स्पष्टम् । (१७)

'पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः' इति वशीकार्यपरम्परा-विश्रान्तिभूमिभूतभगवद्वशीकरणोपायभूतप्रपदनमन्त्रमाह **यो ब्रह्माणमिति** । **यः** स्वनाभिपद्मे ब्रह्माणमुत्पाद्य तस्य वेदप्रदानेन जगत्सर्गशक्तिमाहितवान्, तं स्वविषयबुद्धिप्रकाशहेतुं मुमुक्षुरहं शरणं प्रपद्य इत्यर्थः । आत्मबुद्धेः प्रकाशो यस्मात् स **आत्मबुद्धिप्रकाशः** । तद्विषयबुद्धिस्फुरणस्य तदनुग्रहायत्तत्वादित्यर्थः । (१८)

---

**संसारमोक्षस्थितिबन्धहेतुरिति** । **संसारे**तिपदं स्थितावप्यन्वेतीत्याशयेन **संसार-स्ये**ति संबन्धसामान्यषष्ठीविग्रहादरणम् । अर्थस्तु संसारान्मोक्षे, संसारस्थितिरूपे सर्गकालिकावस्थाने, प्रलयसाधारणे बन्धे च हेतुरिति । (१६)

**तन्मय** इत्यत्र तच्छब्दः स इत्युक्तपरामर्शी भवतु अत्यन्तसंनिहितत्वादित्यभिसंधायाह तदात्मक एवेति । व्यवहितग्रहणेष्टौ तु प्रधानक्षेत्रज्ञमय इत्येवं रीत्याऽपि व्याख्यानं भवति । (१७)

भक्त्या भगवतः प्राप्यत्वमेतावदुक्तम् । प्रपत्त्याऽपि प्राप्योऽयमिति रहस्योपदेशः क्रियते यो ब्रह्माणमिति । **प्रपदनमन्त्रमिति** । मन्त्ररत्नवत् अस्यापि प्रपद्ये इति वर्तमानापदेशघटितत्वात् प्रपदने करणमन्त्रत्वम् । भक्त्यङ्गस्वतन्त्रोभयविधप्रपत्तिपरमिदमविशेषादिति स्तोत्रभाष्यादितो ज्ञेयम् । **आत्मबुद्धिप्रकाशमिति** पदेन मधुकैटभापहृतवेदपुनरर्पणविहितोऽनुग्रहोऽपि सूच्यते । (१८)

निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् ।
अमृतस्य परं सेतुं दग्धेन्धनमिवानलम् ॥ १९ ॥

यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति ॥ २० ॥

तपःप्रभावाद् देवप्रसादाच्च ब्रह्म ह श्वेताश्वतरोऽथ विद्वान् ।
अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यगृषिसंघजुष्टम् ॥ २१

---

उक्तब्रह्मज्ञानाभावे मोक्षसंभावनैव नास्तीत्याह **निष्कळमिति** मन्त्रद्वयेन आकाशस्य चर्मकटादिवत् वेष्टनं यदा अल्पशक्तयो मनुष्याः करिष्यन्ति, **निष्कलं** निरवयवं **निष्क्रियं** कृतकृत्यं **शान्तम्** अशनायाद्यूर्मिषट्करहितं **निरवद्** आश्रितपराङ्मुखत्वाद्यवद्यरहितं **निरञ्जनम्** असङ्गस्वभावम् **अमृतस्य** मोक्षस्य मुख्यं सेतुं दग्धेन्धनानलवत् स्वप्रकाशकं देवमविज्ञाय दुःखस्य नाशो भवति यथा आकाशस्य चर्मवत् वेष्टनमसंभावितम्, एवं परमात्मज्ञानमन्तरेण मोक्षो संभावित इत्यर्थः । (१९+२०

**तप** इति । 'मनसश्चेन्द्रियाणाञ्च ऐकाग्र्यं परमं तपः' इत्युक्तचित्तैकाग्र लक्षणतपःप्रभावाच्च [ त् परमात्मानुग्रहाच्च ? ] संपन्नब्रह्मविज्ञानः श्वेताश्वतरनामा ऋ **अत्याश्रमिभ्यः**—अति पूजायाम्—पूज्याश्रमयुक्तेभ्यः परमहंससंन्यासिभ्यः, **ऋषि संघैः** वामदेवादिभिः **जुष्टं** सेवितं परमं पवित्रं ब्रह्म प्रोवाचेत्यर्थः । (२१

।.

---

यथा भक्त्यभावेऽपि प्रपत्तिवशान्मुक्तिरधिकारिविशेषे, तथा तदभावेऽपि ज्ञानात्मकोपाय निरपेक्ष एव केभ्यश्चित् स मुक्तिप्रदः स्यात्; अन्यतोऽपि वा मुक्तिः स्यादिति कश्चिन्मन्येत तन्निरसनाय **निष्कल**नित्यादिमन्त्रद्वयम् ।

**अत्याश्रमिभ्य** इत्यस्य अतिशयिताश्रमशालिभ्य इत्यर्थः । 'अनाश्रमी न तिष्ठेत् क्षणमेकमपि द्विजः' इति अनाश्रमावस्थानस्य निषिद्धतया तादृशानामुत्तमपात्रतया ग्रहणायोगा दित्याशयेन **अति पूजाया**मित्युक्तम् । (२१)

वेदान्ते परमं गुह्यं पुराकल्पे प्रचोदितम् ।
नाप्रशान्ताय दातव्यं नापुत्रायाशिष्याय वा पुनः ॥ २२ ॥

यस्य देवे परा भक्तिः यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥

प्रकाशन्ते महात्मनः इति ॥

॥ ओं 'पूर्णमदः,' 'भद्रं कर्णेभिः,' 'सह नाववतु' इति शान्तिः ॥

। इति श्वेताश्वतरोपनिषदि षष्ठोऽध्यायः ।

॥ इति श्वेताश्वतरोपनिषत् ॥

शुभमस्तु

---

वेदान्त इति । वेदान्तेष्वतिरहस्यतया निगूढं पुराकल्पे ब्रह्मणे उपदि-
[ विज्ञानं शान्तेभ्यः पुत्रेभ्यः शिष्येभ्य एव प्रब्रूयात्; नान्येभ्यः
। (२२)

भगवद्विषये गुरुविषये च उत्कृष्टभक्तिशून्यानाम् उक्तार्था उपदिष्टा अपि
इत्याह यस्य देव इति । यस्य भगवत्युत्कृष्टा भक्तिः, तत्तुल्या गुरावपि भक्तिः,
महात्मन एते अर्था भासन्ते; नेतरेषामित्यर्थः । द्विरुक्तिरध्यायसमाप्त्यर्था
रार्था च ] ।

एतदध्यायान्तर्गतवाक्यविषयमधिकरणं लिख्यते —

तृतीयाध्याये उभयलिङ्गपादे वेदान्ते जगत्कारणतया प्रतिपाद्यमानस्यात्मनः,
य आत्मा स सेतुर्विधृति 'रिति सेतुत्वश्रवणात सेतोश्च प्राप्यान्तरप्रापकत्व-
र्शनेन ब्रह्मणोऽपि प्राप्यान्तरप्रापकतैव [ प्रतीयते ]; न तु स्वयं प्राप्यता ।
— एतं सेतुं तीर्त्वेति तरितव्यत्वाभिधानेन एतस्य प्राप्यत्वाभावाविष्करणात्

---

मूले हीति एवार्थे । तेन तस्यैवेत्यर्थलाभः । एतदनुसारेण व्यतिरेकमुखेनावतरणं कृतम् ।
'इत्यस्य अत्रोपनिषदि उक्ता इत्यर्थः । अकथिताः साक्षादाचार्यानुक्ता अपीत्यर्थोऽपि
।

वेदान्तेषु, 'चतुष्पात् ब्रह्म षोडशकलम्' इत्युन्मानश्रवणात् नेदमपरिमित अपरिमितस्योन्मानासंभवात् । अतो वेदान्तेषु अपरिमितत्वेन प्रतीयमानमन्यदे प्रतीयते । किञ्च — 'अमृतस्य परं सेतु' मिति अमृतस्य वस्त्वन्तरस्य प्राप्यप्र कत्वलक्षणः संबन्धः षष्ठ्या प्रतीयते । न हि स्वस्मिन्नेव प्राप्यप्रापकत्वल संबन्धः संभवति । किञ्च — 'तेनेदं पूर्णं पुरुषेण सर्व'मिति प्रतिपादितपुरुषा 'ततो यदुत्तरतरम्' इत्यधिकस्य निर्देशात् परस्मादपि ब्रह्मणः परमन्यत् दिश्यते । अत एभ्यो हेतुभ्यः परस्मादपि ब्रह्मणः अन्यत् परमभ्युपगन्तव्यमि "परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः" इति सूत्रेण पूर्वपक्षे प्राप्ते उच्यते

'सामान्यात्तु" । 'य आत्मा सेतु'रिति व्यपदेशः, 'एषां लोका संभेदाये' ति वाक्यशेषश्रुतासंकरकारित्वलक्षणधर्मसामान्यनिबन्धनः; न तु प्र न्तरप्रापकत्वलक्षणधर्मनिबन्धनः । 'एतं सेतुं तीर्त्वे' त्यत्र तरतिश्च प्राप्तिव वेदान्तं तरतीतिवत्; नोल्लङ्घनवचनः ।

यदुक्तमुन्मानव्यपदेशादस्य परिमितत्वं प्रतीयत इति, तत्राह, "बुद्ध पादवत्" । यथा 'मनो ब्रह्मेत्युपासीतेत्यध्यात्मम्', 'तदेतच्चतुष्पाद् ब्रह्म पादः प्राणः पादः चक्षुः पादः श्रोत्रं पादः इत्यध्यात्मम्' इत्यत्र ब्रह्मप्रतीकभूत आदौ वागादिपादत्वव्यपदेश उपासनार्थः; न तु तात्त्विकः; मनसो वाग पादत्वासंभवात् — एवमपरिच्छिन्नस्य ब्रह्मणः, 'प्राची दिक् कला प्रतीची कला दक्षिणा दिक् कला उदीची दिक् कला । एष वै सोम्य चतुष्कलः ब्रह्मणः प्रकाशवान् नामे'त्युक्तदिगादिलक्षणचतुष्कलपादसंबन्धासंभवादुपासनार्थे

---

षोडशकलमिति । नेदं श्रौतं पदम् । किंतु सत्यकामं प्रत्युपदिष्टायां षोडशक विद्यायां चतुरः पादान् प्रदर्श्य प्रतिपादं चतुष्कलत्वमुक्तमिति अर्थसिद्धकथनमेतत् । **परस्त रस्येति** । वस्त्वन्तरं प्रतीत्यर्थः ।

**मनसो वागादिपादत्वासंभवादिति** । निखिलजगत्कारणस्य ब्रह्मणो वागा पादायोगात् इदं चतुष्पात्त्वं तस्य नूनमुपासनार्थमिति निश्चितम्, तथैव षोडशकलस्थले भाष्यादितो ज्ञायते । अत्र तु मनो ब्रह्मेत्युपासीतेति वाक्ये ब्रह्मणीव मनस्यपि चतुष्प वास्तवम्, किंतु उपासनार्थं कल्पितमित्यधिकमुक्तमिति ध्येयम् ।

ननु स्वयमनुन्मितस्य कथमुपासनार्थतयाऽप्युन्मानप्रतीतिः? तत्राह, "स्थान-विशेषात् प्रकाशादिवत्"। यथा प्रकाशाकाशादेरपरिच्छिन्नस्यापि वातायनाद्युपाधिवशेन परिच्छिन्नत्वानुसन्धानम्, एवमिहापि अभिव्यक्तिस्थानभूतप्रा(वा ?)गाद्युपाधिवशेन उन्मितत्वानुसन्धानमुपपद्यते ।

यदुक्तम्, 'अमृतस्य परं सेतु'मिति संबन्धव्यपदेशेन अमृताद् भेदोऽवग-म्यत इति । तत्राह, "उपपत्तेश्च"। 'यमेवैष वृणुते तेन लभ्यः' इति 'स्वप्राप्तेः स्वयमेव साधनतया जोघुष्यमाणे' ब्रह्मणि स्वेनैव प्राप्यप्रापकत्वलक्षणसंबन्धव्यपदेश-स्यापि नानुपपत्तिः ।

यदुक्तम् —'ततो यदुत्तरतर'मिति अधिकं वस्तु प्रतिपाद्यत इति, तत्राह, "तथाऽन्यप्रतिषेधात्"। 'यस्मात् परं नापरमस्ती'ति तदतिरिक्तोत्कृष्टवस्तुनो निषेधेन तद्विरुद्धतया, 'ततो यदुत्तरतर'मिति वाक्ये तदधिकवस्तुपक्षेऽसंभवात्, ततो यदुत्तरतर मित्येतत् पूर्वोप(पूर्वप्रति) पादितस्य पुरुषपारम्यस्य उपरि उपसंहार-रूपम् । एतच्च पूर्वत्र तन्मन्त्रव्याख्यायां स्पष्टीकृतम् ।

---

वातायनादीति । प्रकाशस्य वातायनेन परिच्छिन्नत्वम्, आकाशस्य च घटादिना । अभिव्यक्तिस्थानभूतवागाद्युपाधीति पाठो युक्तः; न तु प्रागादीति । श्रुतप्रकाशिकायाम्, "दृष्टान्तभूतवागादिविषयमिदं सूत्रम्" इत्युक्तत्वात् । षोडशकलत्वादिकं ब्रह्मणि उपासनार्थ-मुक्तम्, वागादिपादवदित्युक्तं कथमुपपद्यते, अनुन्मिते वागादिपादोन्मानस्याप्ययोगादिति शङ्का-परिहारार्थं सूत्रमिति तदर्थः ।

यमेवैष इति । ननु यमेवैष इति वाक्यं निरतिशयप्रीतिरूपापन्नध्यानलभ्यत्वस्य ब्रह्मणि बोधनार्थमिति जिज्ञासाधिकरणभाष्ये स्पष्टमिति कथमत्रानन्योपायत्वमनेन बोध्यत इत्युच्यत इति चेन्न—तृतीयपादेन प्रीतिरूपापन्नभक्तिलभ्यत्वमुक्तम्। यमेवेति एवकारेण वृतेनैव लभ्य इति कथनात् वरणाभावे अलभ्य इति ज्ञापनात् वरणकारणजिज्ञासायां प्रियतमत्वस्य वरणहेतुताया आनुभविकत्वात् प्रियतमत्वं प्रति प्रीत्यतिशयभाक्त्वं हेतुरित्यस्य गीतत्वाच्च प्रीतिरूपापन्नध्यान-लाभात् । एवमपि प्रापकस्यैव प्राप्यत्वमपि लभ्य इति पदेन दर्शितमेव। स्पष्टीकृतश्चेदं चतुर्थपादेन 'तस्यैष आत्मा विवृणुते तनूं स्वाम्' इत्यनेनेत्याशयात् ।

"अनेन सर्वगतत्वमायामशब्दादिभ्यः"। अनेन=ब्रह्मणा सर्वगतत्वं=सर्वस्य जगतो व्याप्तत्वम् आयामशब्दादिभ्योऽवगम्यते। आयामशब्दस्तावत् — 'तेनेदं पूर्णं पुरुषेण सर्वम्', 'अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः' इत्यादि। आदिशब्देन, 'ब्रह्मैवेदं सर्वम्' इत्यादयो गृह्यन्ते। अतो न परब्रह्मणोऽन्यत् प्राप्यमस्तीति स्थितम् ॥

अस्याश्चोपनिषदः कृत्स्नाया भगवत्परत्वं सर्वव्याख्यानाधिकरणे व्यासार्यैः समर्थितम्। तदुच्यते। प्रथमद्वितीयखण्डयोः, **देवात्मशक्तिम्, व्यक्ताव्यक्तं भरते विश्वमीशः, यदात्मतत्त्वेन तु ब्रह्मतत्त्वम्, ज्ञात्वा देवम्, एष हि देवः प्रदिशोऽनु सर्वाः** इति देवात्मेशब्रह्मशब्दैः परमात्मा निर्दिश्यते। ते च शब्दाः 'अपहतपाप्मा दिव्यो देव एको नारायणः', 'विश्वं नारायणं देवम्', 'आत्मा नारायणः परः', 'अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठञ्च समाश्रितः। ईशः सर्वस्य जगतः', 'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्' इत्यादिवाक्यगतनारायणप्रत्यभिज्ञापकाः। अत्रेशशब्दश्च न रूढ्या प्रयुक्तः। अपितु गुणयोगात्। '**अनीशश्चात्मा**,' '**ज्ञाज्ञौ द्वावजावीशनीशौ**', '**ईशः सर्वस्य**' इति निर्देशस्य सप्रतिसंबन्धितया अवयव( वार्थ? )विवक्षाज्ञापकत्वात्। **अनन्तश्चात्मा विश्वरूपो ह्यकर्ता** इत्यत्रानन्तशब्दो योगरूढः। रूढ्यविवक्षानिमित्तसप्रतियोगिकनिर्देशाभावात्।

**तृतीये च** खण्डे, **य एतद्विदुरमृतास्ते भवन्तीत्यनेन**, 'अम्भस्यपारे' इत्यनुवाकः प्रत्यभिज्ञाप्यते। स हि परमपुरुषविषयः। एवमुपक्रमो भगवत्परः। **एको हि रुद्र** इत्यस्यानन्तरम्, **विश्वतश्चक्षुरुत विश्वतोमुख** इति मन्त्रश्च भगवत्प्रत्यभिज्ञापकः। तस्य विद्युद्वर्णपुरुषविषयत्वात्। **द्यावाभूमी जनयन् देव** एकः इति

---

सर्वव्याख्यानाधिकरणटीकायामस्या अप्युपनिषदो भगवत्परत्वस्थापनं रुद्रपरत्वभ्रमव्युदासाय कृतं जिज्ञासुचित्तप्रसौकर्याय प्रायः शब्दत एवानुवदितुमारभते अस्याश्चेति ॥

।, 'शीर्ष्णो द्यौः समवर्तत, पद्भ्यां भूमिः' इत्यस्य प्रत्यभिज्ञापकम् । यो देवानां भवश्चोद्भवश्च विश्वाधिको रुद्रो महर्षिः । हिरण्यगर्भं जनयामास पूर्वम् ।त्येतत्तु यच्छब्दयोगादनुवादरूपतया प्रमाणान्तरसापेक्षतया दुर्बलम् । इदं रुद्रस्य ह्वृचशतपथब्राह्मणावगतहिरण्यगर्भजन्यत्वविरोधि हिरण्यगर्भजनकत्वं न प्रतिपाद-ातुं प्रभवति । बह्वृचे, 'तदिदास भुवनेषु ज्येष्ठं यतो जज्ञे उग्रस्त्वेष नृम्णः । सद्यो ज्ञानो निरिणाति शत्रून्' इति हिरण्यगर्भस्रष्टृत्वं रुद्रशब्दरूढ्यर्थस्य प्रतिपाद्यते । ाबालोपनिषदि, 'ललाटात् क्रोधजो रुद्रः' इति नारायणादुत्पन्नत्वं प्रतीयते; ोपनिषदि, सोऽन्यं कामं मनसा ध्यायीत। त्र्यक्षः शूलपाणिः पुरुषोऽजायत' इति । ारायणोपनिषदि, 'नारायणाद्रुद्रो जायते' इति । बृहदारण्यके, 'ब्रह्म वा इद' मिति ह्म प्रस्तुत्य, 'इन्द्रो वरुणः सोमो रुद्रः पर्जन्यः' इतीन्द्रादितुल्यतया रुद्रस्यापि ह्मणः सकाशादुत्पत्तिः प्रतिपाद्यते । शतपथे अष्टमूर्तिब्राह्मणे, 'भूतानां च ापतिः संवत्सरमुषसि रेतोऽसिञ्चत् । संवत्सरे कुमारोऽजायत । सोऽरोदीत् । प्रजापतिरब्रवीत्, कुमार! किं रोदिषीति । सोऽब्रवीत्, अनपहतपाप्मा वा ह्मस्मीति अनाहितनामा; नाम मे धेहि पाप्मनोऽपहत्या इति । तं पुनः ापतिरब्रवीत्, रुद्रोऽसीति' इत्यादिना रुद्रस्य चतुर्मुखजन्यत्वम् अनपहत-प्मत्वादिकमावेद्यते । तथा शैलालिब्राह्मणे चतुर्मुखस्रष्टृत्वं रुद्रस्य प्रतिपाद्यते । न्त्रे च 'विरूपाक्षाय दन्ताञ्जये (दत्ताञ्जलये) ब्रह्मणः पुत्राय' इति ब्रह्मणः पुत्रत्वं ीयते । 'सोऽब्रवीत् । वरं वृणे । अहमेव पशूनामधिपतिरसानीति । तस्माद्रुद्रः ूनामधिपतिः' इति वरदानलब्धपशुपतिभावः श्रूयते, 'विष्णोरेवा(षा)ऽस्य प्रभृधे र्भिः । विधेहि रुद्रियं महत्त्वम्' इति विष्ण्वाराधनलब्धमहिमत्वं रुद्रस्य श्रूयते । तो हिरण्यगर्भजन्यत्वेन नारायणजन्यत्वेन च अनपहतपाप्मत्वेन कर्माधीनैश्वर्यवत्त्वेन श्रुतस्य रुद्रस्य तद्विरुद्धहिरण्यगर्भजनकत्वस्य अवताररूपोत्पत्तिरिति विरोधपरिहारस्य

---

विरोधपरिहारस्य वा असंभवादित्यादिर्वा न प्रतिपादयितुं प्रभवति इति ।क्तं प्रति हेतुः । मध्ये बह्वृचे इत्यारभ्य, 'श्रूयते । अतः' इत्यन्तेन तत्र हेतुरुक्तः । ह्वृचादौ एवमेवंश्रवणादिति तदर्थः ।

वा असंभवात् । कल्पभेदेन एकस्यैव रुद्रस्य हिरण्यगर्भरूपात् स्वस्मादुत्प कल्पान्तरे रुद्ररूपात् तस्मात् हिरण्यगर्भरूपतयोत्पत्तिरिति कल्पनस्यापि, कार्य कर्मवश्यत्वेन [च?] प्रतिपादिते तस्मिन्नसंभवात् । इन्द्रादीनामपि तथात्वापाताच्च । विश्वाधिकत्वरूपविशेषणासंभवाच्च । ततश्च रुद्रशब्दस्य कार्यरुद्रव्यतिरिक्तविष सति, अस्य वाक्यस्यानुवादरूपतया, 'नारायणाद् ब्रह्मा जायते' इत्यादि ग्यार्थप्रापकवाक्यानुगुण्येन भगवत्परत्वनिश्चयः । 'रुद्रस्य हिरण्यगर्भजनकत्वाम रूढ्यर्थत्यागे स्वीकार्ये हिरण्यगर्भशब्दस्य रूढिं परित्यज्य स्कन्दपरत्वमाश्रीयता प्रसिद्धस्य रुद्रस्य स्कन्दजनकत्वसंभवात्' इत्यपि शङ्का निरस्ता; विश्वाधिकत्वादिवि षणानां रुद्रे असंभवात् । अतो रुद्रशब्दो भगवत्परः; 'रुद्रो बहुशिराः' सहस्रनामपाठात् ।

**या ते रुद्र शिवा तनू**रित्यस्यानन्तरम्, **ततः परं ब्रह्म परं बृहन्त**मि वाक्यम्, 'नारायणः परं ब्रह्मे'ति महोपनिषत्प्रत्यभिज्ञापकम् । **ईशं तं ज्ञात्वा अमृ भवन्ती**त्यत्र ईशशब्दः पूर्ववत् यौगिकः । वैरूप्यायोगात् । '**वेदाह**'मित्यनन्त वाक्यस्यैतच्छब्दः पूर्वरुद्रशब्दवाच्यस्य महापुरुषत्वमवगमयति । प्रकृतपरामर्शित्वात **ततो यदुत्तरतर**मिति वाक्यमपि, "परमतः सेतून्माने" त्यत्रोपपादितरीत्य प्रकृतोपसंहारपरम् । **सर्वाननशिरोग्रीव**त्वञ्च पुंसूक्तार्थस्मारकम् । **सर्वव्यापि**पदं 'व्याप्य नारायणः' इत्येतत् स्मारयति । **भगव**च्छब्दस्तु, 'भगवान् पवित्रं वासुदे पवित्रम्', 'परं पवित्रं भगवान् वासुदेवः', 'ये भगवन्तं वासुदेवमेवं विदुः' इ वासुदेवासाधारणः । अत एव हि स्मर्यते, 'एवमेष महाशब्दो मैत्रेय भगवानिति परमब्रह्मभूतस्य वासुदेवस्य नान्यगः' इति । **सत्त्वस्यैष प्रवर्तकः** इति सत्त्वप्रवर्तकत्व भगवत इति स्थितम्; 'यो ह खलु वा अस्य सात्त्विकोंशः सोऽसौ ब्रह्मचारिणः यो विष्णुः' इति मैत्रायणीयश्रुतेः । **अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मे**ति अन्तरात्म त्वञ्च सुबालोपनिषत्प्रत्यभिज्ञापकम् । **हृदा मनीषे**ति तु विद्युद्वर्णपुरुषस्मारकम् अनन्तरम्, **सहस्रशीर्षे**त्यादिपुरुषसूक्तमन्त्रद्वयमधीतम् । **सर्वस्य प्रभुमीशान**

येतत् नपुंसकत्वात् यौगिकमेव। न तु रूढम्; पुल्लिङ्गताप्रसङ्गात्। **सर्वस्य** णं **सुहृत्** इत्येतत्तु, 'निवासः शरणं सुहृद् गतिर्नारायणः' इति श्रुतिप्रत्यभि-ज्ञकम्। **तमाहुरग्र्यं पुरुषं** महान्तमिति महापुरुष एव स्वष्टमुक्तः। धातृश-मपि महापुरुषशब्देनैकार्थयति **अणोरणीयानिति** मन्त्रः।

चतुर्थे च खण्डे, '**द्वा सुपर्णा**' इत्यादिवाक्यद्वयम् मुण्डकोपनिषदैकार्थ्यात् मपुरुषपरम्। अतः **मायिनं तु महेश्वरमि**त्यत्र महेश्वरशब्दो मायाप्रेरकत्वपरः। सर्वलोकमहेश्वरम्', 'क्षीरोदस्योत्तरे तीरे जग्मुर्लोकहितार्थिनः' इत्यारभ्य, 'ततः स्थो महेश्वरः' इत्यादिषु महेश्वरशब्दो भगवति प्रयुक्तः। **येनेदं सं च वि चैति** र्वमिति प्रकृतं सर्वस्य नियन्तृत्वमेव **तमीशानं वरद**मित्यत्रोच्यते। पूर्वम् **अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मे**'ति पुरुषस्योक्तत्वात्। तत्र च, **ईशानो भूत-भव्यस्ये**'ति श्रुत्यन्तरप्रसिद्धेशानशब्दस्य प्रतिसंबन्ध्यभिधानेन रूढिविरहावगमात् भूतभव्यशब्दनिर्दिष्टस्यैवेह सर्वशब्दप्रतिपन्नत्वाच्च तद्वदेव रूढिविरहः सिद्धः। '**ईशेऽस्य द्विपदश्चतुष्पदः त (क?)स्मै देवाय हविषा विधेम**' इत्यत्र, हिरण्यगर्भ' इत्यष्टर्चतुल्यविषयत्वं प्रतीयते। तच्च भगवत्परमित्युपपादितम्। एवं भगवत्परानेकोपनिषदैकार्थ्यप्रतीतेः, **ज्ञात्वा शिवम्**, **शिव एव केवलः** इति शिवशब्दद्वयं तत्परम्। एवं मुहुरभ्यस्यमानस्यापि शिवशब्दस्य, 'आकाशं प्रत्यस्तं यन्ति, आकाशो ह्येवैभ्यो ज्यायान्' इत्यत्र अभ्यस्ताकाश [शब्द?] स्येव रूढार्थ-त्याग उपपन्नः। किञ्च **सर्वव्यापी च भगवान् तस्मात् सर्वगतः शिवः** इत्ययं शिवशब्दः प्राकरणिकशिवशब्दानां माङ्गल्यपरत्वमेव सूचयति। सर्वगतत्वेऽपि भगवच्छब्दवाच्यत्वात् निर्दोष इति हि तस्य वाक्यस्यार्थः। अन्यथा सर्वव्यापिसर्व-गतपदयोः पुनरुक्तिप्रसङ्गात्। **तदक्षरं तत् सवितुर्वरेण्यम्** इत्यनेन 'अक्षरं प्रभुम्,' 'तत्सवितुर्वरेण्यं ध्रुवमचलममृतं विष्णुसंज्ञं सर्वाधारं धामे'तिश्रुतिद्वयैका-र्थ्यमवगम्यते। **हृदा मनीषे**ति वाक्यम्, '**नैनमूर्ध्वं न तिर्यञ्च**'मिति मन्त्रद्वयम-

ध्यगतवाक्यस्थशिवशब्दस्य परमपुरुषविषयतां गमयति । तद्धि तयं समुद्रान्तर्वा विद्युद्वर्णपुरुषविषयम् । अतः, '**मा नस्तोक**' इति मन्त्रस्थरुद्रशब्दोऽप्यवयव शक्त्या अपर्यवसानवृत्त्या वा भगवद्विषयः ।

[अतः ?] पञ्चमखण्डे, '**भावाभावकरं शिव**'मिति शिवशब्द व्याख्यातः ।

षष्ठे च — **यः कालकालः** इति कालस्यापि परिच्छेदकः काल उक्तः नायमन्तकः । **भगेश**मित्यनेनापि भगवच्छब्दवाच्यानामैश्वर्यादीनां षण्णामीश्वरत्वमेव प्रतीयते । ऐश्वर्यनिरङ्कुशत्वमेवोक्तम्, **तमीश्वराणां परमं महेश्वर**मिति । ईश्वराणामिति प्रतिसंबन्धिनिर्देशात् महेश्वरपदे रूढिर्न शक्यशङ्का । **देवतानां परमं च दैवत**मित्यनन्तरनिर्देशवत् । तद्धि वाक्यं देवतापारम्यपरम् । तत्र च **दैवतपति** शब्दौ न क्वचित् देवताविशेषे रूढौ । तत्स्थानीयश्च महेश्वरशब्दः । अतो न रूढ्युन्मेषः । **न तत्समश्च, पराऽस्य शक्ति**रित्यादिभिश्च तत्पारम्योपपादनम् । 'एको देवः,' 'एको नारायणः' इत्यनेनैकार्थ्यात् । **न तत्र सूर्यो भातीति** मन्त्रश्च कठवल्ल्यधीतत्वात् विष्णोः प्रत्यभिज्ञापकः । **नान्यः पन्था** इति, पुंसूक्तं स्मारयति । ईशादिशब्दानां यौगिकत्वम्, ईशानत्वस्य निरुपाधिकत्वञ्च दर्शयति स **ईशोऽस्ये**ति । '**यो ब्रह्माणं विदधाति पूर्वम्, शरणं प्रपद्ये, अमृतस्य परं सेतु**मिति निर्देशाश्च नारायणत्वसाधकाः । **य** इत्यनुवादरूपत्वात्; ब्रह्मणो भगवन्नाभिसंभव [त्व] स्य प्रमाणप्रतिपन्नत्वात्; 'निवासः शरणं सुहृत्' इति श्रुतेः; 'अमृतस्यैष सेतुः' इति मुण्डके श्रवणात् । **यदा चर्मव**दिति वाक्यम् उपायान्तराभावपरम्, **नान्यः पन्था** इत्युक्तार्थविवरणरूपम् ।

एवमुपक्रमोपसंहारादिभिः भगवत्परत्वावगमात् बहूपनिषच्छ्रुतयोग्यार्थासाधारणाभ्यस्तनारायणशब्दानुरोधेनैव नानार्थसाधारणैकैकोपनिषत्पठितायोग्यार्थशिवादिशब्दानां नेयत्वाच्चास्या उपनिषदो भगवत्परत्वं सिद्धमिति ॥

क्षेमाय यः करुणया क्षितिनिर्जराणां
भूमावजृम्भयत भाष्यसुधामुदारः ।
वामागमाध्वगवदावदतूलवातो
रामानुजः स मुनिराद्रियतां मदुक्तिम् ॥

इति श्रीमद्वाताचार्यचरणारविन्दचञ्चरीकस्य
वात्स्यानन्तार्यपादसेवासमधिगतशारीरकमीमांसाभाष्यहृदयस्य
परकालमुनिपादसेवासमधिगतपारमहंस्यस्य
**श्रीरङ्गरामानुजमुनेः**
कृतिषु
**श्वेताश्वतरोपनिषत्प्रकाशिका संपूर्णा ॥**
श्रीरस्तु
श्रीमते रङ्गरामानुजस्वामिने नमः ।

---

बृहदारण्यकान्तानां वेदान्तानां परिष्कृतिम् ।
विदधानः परिष्कारं भावितानामपि क्रमात् ॥

विधित्सुस्तां विनम्यार्यान् वात्स्यः श्रीवीरराघवः ।
श्वेताश्वतरवेदान्तपरिष्कारं व्यधादिति ॥

मानस मदीय शुद्धो हंसः श्रीरङ्गलक्ष्मणो भवति ।
लसतु, श्वेताश्वतरश्रुतिर्यथादेव इति सदा भाव्या ॥

इति श्रीमद्वेदान्तरामानुजयतीन्द्रचरणारविन्दचञ्चरीकस्य
श्रीमद्रङ्गरामानुजयतीन्द्रचरणसरोजसेवासमधिगतसर्ववेदान्तार्थस्य
वात्स्यसच्चक्रवर्तिनो वीरराघवाचार्यस्य
कृतिषु उपनिषद्भाष्यपरिष्कारे
**श्वेताश्वतरोपनिषद्भाष्यपरिष्कारः ।**
शुभमस्तु ॥

श्रीः

# श्वेताश्वतरोपनिषदर्थसंग्रहकारिकाः

१. बृहदारण्यकान्तासु गतास्वीशादिषु क्रमात् ।
श्वेताश्वतरमन्त्रोपनिषदेकादशी स्थिता ॥

२. भोक्तृभोग्यात्मचिदचिदन्तरात्मैव कारणम् ।
अष्टाङ्गयोगतो जीवं समीक्ष्यैष निरीक्ष्यते ॥

३. एकोऽसौ भगवान् मुक्तेः पन्था जन्मलयादिकृत् ।
अकारार्थोऽयमग्न्यादिदेवतादिजगन्मयः ॥

४. कर्मार्हपरतन्त्राणुजीवतत्त्वविलक्षणः ।
ब्रह्मादिकृत् प्रपत्त्येकवश्यो विश्वफलप्रदः ॥

५. श्वेताश्वतरखण्डानां षट्केनेत्थं समीक्षितः ।
शिवरुद्रादिशब्दोक्तया भगवान् पुरुषोत्तमः ॥

शुभमस्तु



श्रीः

# अथर्वशिखोपनिषत्

अथर्ववेदीयोपनिषच्छान्तिपाठः—

भद्रं कर्णेभिः शृणुयाम देवाः भद्रं पश्येमाक्षभिर्यजत्राः।
स्थिरैरङ्गैस्तुष्टुवाँसस्तनूभिर्व्यशेम देवहितं यदायुः॥
स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु॥
ओंशान्तिश्शान्तिश्शान्तिः]

## प्रथमः खण्डः

रिः ओम्। १ अथ हैनं ? ?पैप्पलादोऽङ्गिराः सनत्कुमारश्चाथर्वाणमुवाच—

श्रीः

श्री श्रीनिवासपरब्रह्मणे नमः

[ येनोपनिषदां भाष्यं रामानुजमतानुगम्। रम्यं कृतं प्रपद्ये तं रङ्गरामानुजं मुनिम्॥ ]

## श्रीरङ्गरामानुजमुनिविरचिता अथर्वशिखाप्रकाशिका।

अतसीगुच्छसच्छायमञ्चितोरःस्थलं श्रिया। अञ्जनाचलशृङ्गारमञ्जलिर्मम गाहताम्॥

व्यासं लक्ष्मणयोगीन्द्रं प्रणम्यान्यान् गुरूनपि। कुर्वेऽथर्वशिखाव्याख्यां विदुषां तोषहेतवे॥

ध्येयं निर्धारयितुमाख्यायिकामाह—**अथ हैनम्**............। पिप्पलाद-सुतश्चाङ्गिराश्च ब्रह्मसुतश्च (?) सनत्कुमारश्चाथर्वाणं गुरुमुपेत्य ऊचुः। उवाचेति प्रत्येकाभिप्रायेणैकवचनम्।

श्रीः

श्रीमद्भ्यो रङ्गरामानुजमहादेशिकेभ्यो नमः

## अथर्वशिखोपनिषद्भाष्यपरिष्कारः

ईशान शम्भु शिवशब्दसमीरितोऽपि मुक्त्यर्थभक्तिविषयः पुरुषः स विष्णुः।
इत्यादिशत् स्फुटमथर्वशिखेति तत्त्वं बुद्धं यतो भवतु तेभ्य इदं नमो नः॥

१. ध्येयं निर्धारयितुमिति। ध्यानकरण—ध्यान—ध्यातृ—ध्येयरूपांशचतुष्टयविषय-प्रश्नोत्तररूपाया अस्या उपनिषदो ध्येयदेवताविशेषनिर्धारणेदमर्थं, 'न कारणं कारणाना' मित्यादिना परनिषेधपूर्वं तदंशस्थापनोपपादनादवगम्यते॥

सनत्कुमारोऽपि कश्चित् पिप्पलादसुत इति भ्रान्तिव्युदासायाह ब्रह्मपुत्र इति। ऊचुरिति, उपरि, 'एभ्योऽथर्वा प्रत्युवाच' इति वाक्ये प्रतिपाद्यपुरुषस्वरस बहुवचनान्तेदमनदश्रवणात् प्रष्टारो बहव इति निश्चित्य। एवञ्च पैप्पलादोऽन्यः, अङ्गिरा अन्य इति मन्तव्यम्। पिप्पलादोऽङ्गिरा

—————कोशः ग. ——— तालकोशः ख. मुद्रितकोशः म.

२. किमादौ प्रयुक्तं ध्यानं ध्यायितव्यम्, किं [तद्] ध्यानम्, वा ध्याता, कश्च ध्येय इति ।

३. स एभ्योऽथर्वा प्रत्युवाच—ओमित्येतदक्षरमादौ प्रयुक्तं ध्यायितव्यमिति, एतदक्षरं परं ब्रह्म । ४. अस्य पादाश्चत्वारो वेद ५. चतुष्पादिदमक्षरं परं ब्रह्म ।

---

२. ध्यायते अनेनेति ध्यानं ध्यानकरणम् । उपासनस्याऽऽदौ प्र ध्यानकरणभूतो ध्यातव्यो मन्त्रः क इत्यर्थः । कं[1] मन्त्रं ध्यात्वा आदावुच्चार्य कर्तव्यमित्यर्थः । तथा ध्यानक्रिया किंदेवतारूपा ध्यातव्या । ध्याता किंदेवत ध्यातव्यः । ध्येयो देवताविशेषः क इत्यर्थः । ३. एतदक्षरं परं ब्र अस्मिन्नक्षरे परब्रह्मबुद्धिः कर्तव्येत्यर्थः । ४. [2] अस्य ओंकारस्य अकार-उ मकार अर्धमात्रारूपेषु चतुर्ष्ववयवेषु चतुर्वेदबुद्धिः कर्तव्येत्यर्थः । ५. एत ओमित्यक्षरेऽध्यस्तं परं ब्रह्म प्रतीकस्य चतुष्पात्त्वेन स्वयमपि चतुष्पादित्यर्थः ।

1. कं वा मन्त्रं. ग. 2. एषु चतुर्वेदबुद्धिः. तालकोशे.

---

इत्यपि श्रुतिं पठन्ति केचित् । तदा स्पष्टं बहुत्वम् । पिप्पलादः पैप्पलादोऽङ्गिरास्सनत्कुम पाठः श्रुतिभाष्ययोः स्यादित्यपि विमृश्यम् ॥ ध्यानकरणमन्त्रः क इत्येतावन्मात्रप्रश्ने ध्या तव्यमिति पद व्यर्थम् । ध्यानध्यातारौ किंदेवतारूपेण ध्यातव्यावित्येवोपरि प्रश्नः क्रियते, किं नाम ध्यानस्वरूपम्, को नाम ध्यातेति । उपरि तैलधारावदविच्छिन्नस्मृतिसंततिध्य कर्मज्ञानयोगसंस्कृतान्तःकरणो ध्यातेत्येवंरूपोत्तराभावात्, ध्यानं विष्णुः, ध्याता रुद्र इति रूपत्वस्यैव कथनाच्च । अतो ध्यानकरणमन्त्रोपि किंरूपो ध्यातव्य इत्येव प्रथमप्रश्नोऽपि एवञ्च—ध्यानकरणमन्त्रः प्रणवः । स च नानाक्षरसमाहारात्मकः । तत्र समुदायः ब्र भाव्यः । अक्षरमात्राश्च लोकवेदतत्तद्देवतादिरूपेणेति उपरितनवर्णनोपपत्तिः । अतः किं ध्या तव्यमित्यस्य केन रूपेण ध्यातव्यमित्यर्थो वर्णनीय इति, भाष्ये कं ध्यात्वेति किंरूपं त्यर्थकम् । तुरीयप्रश्ने तु ध्येयः किंरूपेण ध्येय इत्युक्तावपि ध्येयगोचरदृष्टिविधेर्मोक्षार्थत्वि योगात् ध्येयतत्त्वमेव पृष्टं भवतीति 'ध्येयो देवताविशेषः क' इत्येव प्रश्नपर्यवसानम् । ध्यानमिति । तत् ध्यानमितिपूर्वप्रयुक्तकरणार्थकल्युडन्तघटकधातूक्तं ध्यानमित्यर्थः ।

६. पूर्वाऽस्य मात्रा पृथिव्यकारः स ऋग्भिः ऋग्वेदो ब्रह्मा वसवो श्री गार्हपत्यः। ७. द्वितीयाऽन्तरिक्षं स उकारः स यजुर्भिर्यजुर्वेदो णू रुद्रास्त्रिष्टुप् दक्षिणाग्निः। तृतीया द्यौः स मकारः स सामभिः वेदः आदित्याः जगत्याहवनीयः। याऽवसानेऽस्य चतुर्थ्यर्धमात्रा मा लोकः ओंकारः साऽथर्वणैर्मन्त्रैरथर्ववेदः संवर्तकोऽग्निर्मरुतो विराडेकर्षिः।

८. भास्वती स्मृता प्रथमा रक्तपीता महद्ब्रह्मदे( दै )वत्या।

---

६+७. अकार-उकार-मकार-नादरूपार्धमात्रात्मकान् ओंकारावयवान् पृथि-ारिक्षद्युलोकसोमलोकत्वैः, ऋग्यजुस्सामाथर्वणत्वैः, ब्रह्मविष्णुरुद्रसंवर्तकाग्नित्वैः, द्रादित्यमरुत्त्वैः, गायत्रीत्रिष्टुब्जगतीविराट्त्वैः, गार्हपत्यदक्षिणाग्न्याहवनीयै-त्वैः स्तौति— **पूर्वाऽस्य**........। **ऋग्भिः ऋग्वेदः** ऋङ्मन्त्रोपेतः ऋग्वेद र्थः। एवमुत्तरत्रापि। सूर्यलोकलक्षणद्युलोकापेक्षया चन्द्रलोकस्योर्ध्ववर्तित्वम् ात्(?) सोमलोकस्य द्युलोकापेक्षया पृथङ्निर्देशोपपत्तिः। आथर्वणिकानामेकाग्नि-। गार्हपत्यदक्षिणाग्न्याहवनीयाभावात् तस्यैवैकाग्नेरेकर्षिशब्दितस्य गार्हपत्यादि-ननिवेश उपपद्यते॥ नन्ववसाने श्रूयमाणनादात्मिकाया अर्धमात्रायाः, अर्धमात्र-ो नादो ब्रह्म[1]नादैकविग्रहः इति प्रमाणप्रतिपन्नाया ओंकारभिन्नत्वात् कथमस्या ्मात्रायाः, ओंकार इत्युक्तिरिति चेत्—'अर्धमात्रात्मको नादो ब्रह्मनादैकविग्रह' ोंकारं प्रस्तुत्य, 'ततोऽभूत् त्रिवृदोंकारः' इति ओंकारप्रकृतित्वस्य श्रवणात् य ओंकाराभेदव्यपदेश इति द्रष्टव्यम्॥

८. प्रथमा अकाराख्या अर्ध (?) मात्रा भास्वतीनाम्नी रक्तपीतवर्णा महत्त्व-ाकब्रह्मदेवत्या।

1. ब्रह्मानन्दैक. क.

---

८. भास्वती: स्मृता: इति पृथग्वाक्यपाठस्सर्वत्र। (८-१३) तात्पर्यचन्द्रिकायामपि मंशं परित्यज्य प्रथमेत्यादिवाक्यमुपात्तम्। एवं नृसिंहतापनीयेऽपि। तत्र माण्डूक्याथर्व-खाशिरोवाक्यानि बहुलमनूद्य वर्णयति।

९. द्वितीया विद्युमती कृष्णा विष्णुदेवत्या। १०. तृती
शुभाशुभा शुक्ला रुद्रदेवत्या। ११. याऽवसानेऽस्य चतुर्थ्यर्धमा
विद्युमती सर्ववर्णा पुरुषदेवत्या। १२. स एष ह्योंकारश्चतुरक्षरश्चतुष्पादश्च
शिरश्चतुरर्धमात्रः (श्चतुर्थमात्रः)। १३. स्थूलमेतं सत् (स्थूलमेत
ह्रस्वदीर्घप्लुतमिति। १४. ओं१ ओं२ ओं३ [सः।]

९. विद्युमतीति स्मृता कृष्णवर्णेत्यर्थः। १०. [1]शुभाशुभेति प्रसि
शुक्लवर्णेत्यर्थः। ११. अत्र पुरुषशब्देन वासुदेव उच्यते।

"भगवानिति शब्दोऽयं तथा पुरुष इत्यपि।
निरुपाधी च वर्तेते वासुदेवे सनातने॥"

"पुरुसंज्ञे शरीरेऽस्मिन् शयनात् पुरुषो हरिः।
शकारस्य षकारोऽयं व्यत्ययेन प्रयुज्यते॥"

"स्त्रीप्रायमितरत् सर्वं जगत् स्थावरजङ्गमम्।
ऋते तमेकं पुरुषं वासुदेवं सनातनम्॥"

"ब्रह्माद्याः सकला देवा यक्षगन्धर्वकिंनराः।
ते सर्वे पुरुषांशत्वादुच्यन्ते पुरुषा इति॥"

इति स्मरणादिति द्रष्टव्यम्।

१२. चतुर्थी अर्धमात्रा यस्य स तथोक्तः। पूरणप्रत्ययाभावात्[2] छान्दस
१३+१४. **स्थूलमेतं सत् ह्रस्वदीर्घप्लुतमिति।** स्थूलं मिलितं सत् ह्रस्वदी
प्लुतभेदेन[3] त्रिविधमित्यर्थः। तदेव प्रदर्शयति ओं१. ओं२. ओं३.। न च
ह्रस्वाभावात् कथमोंकारस्य ह्रस्वत्वमिति शङ्क्यम्—न्यूङ्खेषु ह्रस्वस्यापि प्रयोगदर्शना

1. शुभेतिप्रसिद्धा. 2. प्रत्ययाभावः. ग. 3. प्लुतभावेन. क. 4. प्रयोगात्.

११. त्रिवृदोकारं प्रति नादस्य प्रकृतित्ववत् पुरुषस्य वासुदेवस्य त्रिमूर्तिप्रकृतित्व
देवतात्वोपपत्तिः।

१३. **स्थूलमेतं सदिति** पाठमादृत्य आङ्पूर्वकइण्धातोः क्तप्रत्यये एतमिति मिलितमि
कमुक्तमिति ज्ञायते। स्थूलमेतदित्येव पाठश्चेत्, स्थूलपदमेव मिलितार्थकं नेयम् अक्षराविभा
प्रश्नोपनिषदि तु ह्रस्वदीर्घप्लुतानां मात्रापदेन ग्रहणम्। न्यूङ्खेष्विति। न्यूङ्खः ओकारघो
कादि व्याकरणे वाचस्पत्यादौ च द्रष्टव्यम्।

१५. इति त्रिरुक्त्वा चतुर्थश्शान्त आत्मा प्लुत [प्रणव] प्रयोगेण स्तमोमिति प्रयुक्त (ज्य) आत्म (प्रयुक्तमात्म) ज्योतिः सकृदावर्तते ।

१६. प्राणान् सकृदुच्चारितमात्रस्स एष ऊर्ध्वमुन्नमयतीत्योंकारः । ।ान् सर्वान् प्रलीयत इति प्रलयः ।

---

एवमुक्तप्रकारेण अकार-उकार-मकारात्मकमात्रयत्रयप्राधान्येन ब्रह्मविष्णुरुद्र-देवतानुसंधानपूर्वकं ह्रस्वदीर्घप्लुतरूपेण त्रिरुक्त्वा—चतुर्थः तुरीयमात्रार्धभूतः ।शब्दितो वासुदेवः शान्ताख्यो महात्मा चतुर्मात्रप्लुतप्रयोगेण अनुसंदधान[1] ोयमान?) स्सन् सकृत् एकरूपतया स्वात्मज्योतिः स्वप्रकाशज्ञानमयः वर्तते आ = समन्तात् हृदये वर्तत इत्यर्थः । चतुर्थार्धमात्रयाऽनुसंहितः ।त्मा हृदये प्रतिष्ठितो भवतीत्यर्थः ।

ओंकारादिनामानि[2] निर्वक्ति — १६. ऊर्ध्वलोकमुन्न[3]मयति प्रापयति । ।दोंकार इत्यर्थः ।

1. संधानस्सन्. क. 2. नामादीनि. ख. 3. उन्नामयति. ग.

---

१५. इति त्रिरित्यत्र इतीत्यस्य एवमित्यर्थः । तद्विवरणम् उक्तरूपेणेति । समस्तमिति ।विशेषणम् । कृत्स्नमित्यर्थः । समस्तम् ओमिति प्लुतप्रयोगेण प्रयुक्त इत्यन्वयः । प्रकर्षेण ः योगविषयीकृतः अनुसंहितः प्रयुक्त इति आत्मविशेषणम् । आत्मपदात्मज्योतिः स्वारस्यादेवं व्याख्यातम् । अन्यथा पुनः-चतुर्थः नादरूपः, शान्त आत्मा विना प्रणव ।गानर्हस्वरूपः प्लुतप्रणवविशिष्टतयैव समस्ततया ओमिति प्रयुज्यमानः स्वात्मस्वरूपं प्रकाशयन् ।दुक्तो भवति । एषा ह्रस्वदीर्घप्लुतानां पृथक् पृथक् प्रयोगानन्तरं प्लुतस्य ( सनादस्य ) रेकवारमावृत्तिः समस्तप्रणवप्रयोगः इति वाक्यार्थो वक्तव्यः । मात्रार्धेति वासुदेवे शान्तात्मनि ।ुर्थ इति चतुर्थार्धमात्राऽभेदारोपः । उक्तत्रिमूर्त्यधिकत्वाद्वा चतुर्थता । 'चतुर्थं मन्यन्ते स मा' इति माण्डूक्येऽप्युक्तम् । अत्र अकारादौ क्रमेण ब्रह्मविष्णुरुद्रत्वोक्तिः, माण्डूक्ये क्रमेण ।रुद्धप्रद्युम्नसंकर्षणत्वोक्तिश्च अविरुद्धा ; चतुर्मुखस्य जागरस्थत्वहरनिरुद्धाधीनत्वात्, रुद्रस्य च ।रे संकर्षणाधीनत्वात् अत्रापि माण्डूक्योक्त एव तात्पर्यात् ।

१७. प्राणान् सर्वान् परमात्मनि प्रणामयतीत्येतस्मात् प्रणव चतुर्धाऽवस्थित इति १८. सर्ववेददेवयोनिः, सर्ववाक्यश्च (क्यवस्तु) (च्यवस्तु) प्रणवात्मकम् ।

इत्यथर्वशिखायां प्रथमः खण्डः ।

(२)

१. देवांश्च समुद्धर्ता सर्वेभ्यो दुःखभयेभ्यस्संतारयतीति तारण तारः । २. सर्वे देवा अस्मिन् विशन्तीति विष्णुः ।

---

१७+१८. सर्वेन्द्रियाणि [1]परमात्मप्रवणानि करोतीति प्रणव इत्यर्थ चतुर्धाऽवस्थितः । प्रणव उक्तरीत्या अकार-उकार मकार-नादात्मना चतु अवस्थित इत्यर्थः । तस्यैवोंकारस्यावयवभूतानां [2]पादानां ऋग्यजुस्सामाथर्ववेद रूपत्वात्, (?), ब्रह्मविष्णुरुद्रसंवर्तकाग्निरूपत्वात्, वसुरुद्रादित्यमरुद्रूपत्वाच्च, गा त्र्यादिच्छन्दोरूपत्वाच्च[4] सर्ववेददेवयोनित्वमोंकारस्य । अत एव सर्वमपि वा प्रणवात्मकञ्चे(?)त्यर्थः ।

१. देवान् सत्त्वप्रकृतिकान् समुद्धर्ता । तदेव विवृणोति—सर्वेभ्यः—तार अतः प्रणवस्य तारशब्दितत्वमित्यर्थः । २. सर्वे देवाः ब्रह्माद्या अवयवत्वेनोंव प्रविष्टा इति ओंकार एव विष्णुरित्यर्थः ।

1. परमात्मनि द्रवणानि. क. 2. पदानां. ग. 3. वेदस्वरूपत्वात्. 4. रूपत्वाद्वा. ग. मूले सर्ववेददेवयोनिस्सर्वकवाक्यश्च. क. सर्ववेदयोनिस्सर्वात्मकवाक्यत्वञ्च

---

१७+१८. गायत्र्यादीति पञ्चम्यन्तं वेदरूपत्वादित्येतत्समनन्तरमेव स्यात्? । स वाक्यवस्तु प्रणवात्मकमिति शङ्करानन्दपाठः । वाक्यं नाम । वस्तु रूपम् । सर्वं नामरूपं ब्रह्मात्मकमिति तदुक्तोऽर्थः । सर्ववाच्यवस्तु प्रणवात्मकमिति अष्टोत्तरशतोपनि त्कोशे । सर्ववाक्यश्च प्रणवात्मकमिति पाठेऽपि सर्वस्यापि वैदिकवाक्यस्य मन्त्रादेश्च प्रणवपूर्व प्रयोगात् प्रणवात्मकत्वं विवक्षितं स्यात्? ।

३. सर्वाणि बृंह(ब्रह्म)यतीति ब्रह्म । सर्वस्यान्तःस्थाने ध्यायिभ्यः प्रदीपवत् प्रकाशयतीति प्रकाशः [प्रकाशः] प्रकाशेभ्यः । ४. सदा ओमित्यन्तश्शरीरे विद्योतयति ( विद्युद्वद् द्योतयति ) मुहुर्मुहुरिति विद्युदिति प्रतीयात् । ५. दिशं दिशं भित्त्वा सर्वान् लोकान् व्याप्नोति व्यापयतीति व्यापनाद्व्यापी महादेवः ।

६. पूर्वाऽस्य मात्रा जागर्ति जागरितम् । ७. द्वितीया स्वप्नम् । तृतीया सुषुप्तिः । चतुर्थी(र्थः)तुरीयम् ।

---

३. सर्वाणि[1] स्वानुसंधातृभूतानि ज्ञानानन्दादिगुणैः बृंह ( ब्रह्म )यति वर्धयतीति ब्रह्म । **सर्वस्यान्तःस्थाने ध्यायिभ्यः प्रदीपवत् प्रकाशयतीति प्रकाशः**–(?) **प्रकाशेभ्यः**[2] । **सर्वस्य**[3] ध्यातृजनस्यान्तः**स्थाने** हृदये वर्तमानस्सन् **ध्यायिभ्यः** स्वेन ब्रह्मध्यायिभ्यः प्रदीपवत् ध्येयं प्रकाशयतीति प्रकाशः **प्रकाशेभ्यः** अपि सूर्यादिभ्यः अतिशयिततया प्रकाशयतीति प्रकाश इत्यर्थः । ४. सदा ओमिति अन्तःशरिरे[4] हृदयस्थाने मुहुर्मुहुस्तत्त्वं विद्योतयतीति **विद्युदिति प्रतीयात्** विद्युन्नामकतया जानीयादित्यर्थः । **दिशं भित्त्वा** दिक्कृतपरिच्छेदमन्तरेण सर्वदिग्देशवर्तिव्यापकतया व्यापित्वम् । व्यापित्वादेव महादेवत्वम् व्यापित्वस्यैव महत्त्वा (?) दिति भावः ॥

एवमनुसरणार्थं नामानि निरुच्य, अथ 'एतदक्षरं परं ब्रह्म' इति प्रक्रमोपदिष्ट ब्रह्मध्यानसाधनत्वं निरूप्यते–**पूर्वाऽस्य मात्रा जागर्ति** । "जागरिते ब्रह्मे"ति श्रुतेः जाग्रद्दशासंपादकत्वादकारस्य ब्रह्मणो **जागर्ती**त्युक्तिः । अतः पूर्वमात्रैव **जागरितम्** । **तुरीयम्** मोक्ष इत्यर्थः । ब्रह्मविष्णुरुद्रपुरुषशब्दितानां चतुर्णाम् अकार–उकार–मकार–अर्धमात्रार्थानां जागरितस्वप्नसुषुप्तिमुक्त्यवस्थासंपादकत्वात्

1. सर्वाणीत्यत्र 'ब्रह्म' इति. ग. 2. प्रकाशेभ्य इति न. ग. 3. सर्वस्यान्तः. ख.
4. अन्तश्शरीरे विद्योतयति हृदयस्थाने. क.

---

प्रकाशः प्रकाशः प्रकाशेभ्य इति द्विरावृत्तपाठो भाष्येपि संमतो वेति विमृश्यम् ।

**८. माला मालाः प्रतिमाला गताः । ९. सम्यक् समस्तानपि वा जयतीति स्वयं प्रकाशः स्वयं ब्रह्म भवतीत्येष सिद्धिकरः । १०. एत ध्यानादौ प्रयुज्यते । ११. सर्वकरणोपसंहारत्वात् धार्यधारणाद् तुरीयम् ॥ १२. सर्वकरणानि मनसि संप्रतिष्ठाप्य ध्यानं विष्णुः ।**

---

तदभिमानित्वाच्च । "जागरिते ब्रह्मा ; स्वप्ने विष्णुः ; सुषुप्ते रुद्रः ; परमक्षरम्" इति श्रुत्यन्तरात । [**माला ?**] एवं प्रमाला = एवमवगच्छतेत्य **मालाः** [1] चतस्रोऽपि मालाः [**प्रतिमालाः गताः ?**] प्रतिनियतार्थतया अ भवन्तीत्यर्थः । ९. समस्तान् ब्रह्मवादान् जयतीत्यर्थः । **स्वयं ब्रह्म भव** आविर्भूतब्राह्मरूपो * भवतीत्यर्थः । **एषः** ओंकारः सर्वसिद्धिकर इत्य **एतस्मात् ध्यानादौ प्रयुज्यते** । एतस्माद्धेतोः ध्यानादौ प्रणवः प्रयुज्यत इ **सर्व**[2]**करणोपसंहारत्वात्** सर्वेन्द्रियवशीकरणहेतुत्वादित्यर्थः । **धार्यस्य** अवध यस्य ब्रह्मणोऽवधारणहेतुत्वाच्च, ब्रह्मप्राप्तिसाधनत्वाद् ब्रह्मप्रतीकत्वाद् [3] ब्रह्मग गाच्चैतदेव ब्रह्मेत्यर्थः ॥

एवं प्रथमप्रश्नस्योत्तरमुक्त्वा द्वितीयप्रश्नस्योत्तरमाह—**सर्वकरणानि.. विष्णुः** । सर्वाणि बाह्येन्द्रियाणि मनसि विलीनानि कृत्वा क्रियमाणं ध्यानम् **विष्णुः** । विष्णुरूपत्व[4]ध्यानं कर्तव्यमित्यर्थः ।

* आविर्भूतस्वरूपो. ख. ग.

1. 'चतस्रोपि मात्रा इत्यर्थ' इत्येतावदेव. क. कोशेषु वाक्यारम्भे मा नास्ति। **मालामात्राः** चतस्रोऽपि मात्रा इत्यस्ति । 2. कारण. ग. 3. बृहत्त्व 4. विष्णुस्वरूप. ग. एतदुपरि **ग.** कोशे बहुलं व्याख्येयव्याख्यानव्युत्क्रमसंक्रमादि ।

---

**ब्रह्मगुणेति** । परस्य ब्रह्मणो बृहत्त्वमप्यस्ति । प्रणवे तदभावेऽपि पूर्वोक्तं त्वमस्तीति भावः ।

**ध्यानं विष्णुरिति** । अत्र ज्ञानस्य स्वयंप्रकाशतया मितिमातृमेयरूपत्रिपुटीभानै निर्विकल्पसमाधौ, "अधराहितचारुवंशनालाः मकुटालम्बिमयूरपिञ्छमालाः । हरिनी विभक्तनीलाः प्रतिभास्सन्तु" "दयाशिशिरिताशया मनसि मे सदा जागृयुः श्रियाऽध्युषित संविदः" इति श्रीदेशिकोक्तदिशा मितिमेयभेदापरिस्फूर्त्या मेयमात्रशेषणात् ध्यानं ध्येयविष्णुमयमेव भवति । तदेवं ध्यानं श्रेष्ठमिति दर्शितम् । अनेनैव ध्येयो विष्णुरिति

१३. प्राणं मनसि सह करणैस्संप्रतिष्ठाप्य ध्याता रुद्रः। १४. प्राणं मनसि सह करणैर्नादान्ते परमात्मनि संप्रतिष्ठाप्य ध्यायीतेशानं प्रध्यायितव्यम्। १५. सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते [ सर्वे ]

---

तृतीयस्योत्तरमाह—प्राणं........रुद्रः। मनसि प्रविलापितैरिन्द्रियैस्सह ाणमपि जीवमपि, "यच्छेद्वाङ्मनसी प्राज्ञस्तद् यच्छेद् ज्ञान आत्मनि। ज्ञान- ानि महति नियच्छेत् तद् यच्छेच्छान्त आत्मनि"इत्युक्तरीत्या परमात्मनि तेष्ठाप्य ध्याता पुमान् रुद्ररूपः। ध्याता रुद्रबुद्ध्या ध्यातव्य इत्यर्थः।

कश्च ध्येय इति चतुर्थस्योत्तरमाह—प्राणं—प्रध्यायितव्यम्। नादान्ते ।मात्रावसाने परमात्मनि जीवं संप्रतिष्ठाप्य तच्छेषत्वैकप्रवणं कृत्वा प्रकर्षेण ध्यात- ीशानं ध्यायीतेत्यर्थः। एवञ्च ईशानशब्दितो देवताविशेषो ध्यातव्य इत्युक्तं भवति। यायितव्यम् इति आत्वाभावेडा[1]गमौ छान्दसौ। तस्यैव प्रकर्षेण ध्यातव्यत्वे क्रमाह सर्वम्—। सर्वमिदं चिदचिदात्मकप्रपञ्चभूतं [2]प्रसिद्धाः ब्रह्मविष्णुरुद्रेन्द्राः

1. इगा. तालकोशे। इडा. ग. 2. प्रपञ्चः ग.

---

ता रुद्रः। विष्णूपासकेषु योगिषु मध्ये सर्वज्ञो रुद्र एव सम्यक् परमात्मनो ध्यातेति ेसन् रुद्रभावना ध्यातुर्ध्याननिष्पत्त्युपयोगिनीति भाव। अनेन परमैकान्तिनोऽपि रुद्रे त्वातिशय, न तु मुक्त्यर्थमुपास्यत्वमिति च दर्शितम्॥ अत्र प्रथमवाक्ये सर्वकरणानां मनसि ष्ठापनम्, द्वितीयवाक्ये प्राणस्यापि मनसि प्रतिष्ठापनम्, तृतीयवाक्ये मनसीव परमात्मनि ष्ठापनञ्च क्रमेणोक्तमस्ति। तथाच प्रत्याहारः, प्राणायामः, ध्यानधारणादि च क्रमेणोक्तमिति ोयते। तत्रैतद्वाक्यत्रयमुख्यार्थभूतेषु, 'ध्यानं विष्णुः,' 'ध्याता रुद्रः,' 'ध्यायीतेशानं यायितव्यम्' इत्येतेषु प्रत्याहाराद्यर्थत्रयक्रमस्य न कश्चित् प्रतिनियत उपयोगो लक्ष्यते। ः तत्तदंशव्युत्पादनमात्रे श्रुतेस्तात्पर्यम्; सर्वं सर्वत्र विवक्षितमेव इत्यभिप्रेत्य द्वितीयवाक्य , 'परमात्मनि संप्रतिष्ठाप्य' इति परमात्मघटनं कृतं भाष्ये। प्राणायामस्य च प्रत्याहारापेक्षया ान्तरतया अष्टाङ्गयोगे परिगणनात् पूर्ववाक्ये करणप्रतिष्ठापने कथिते प्राणायामोऽपि कथितप्राय े प्राणपदं जीवपरं स्वीकृतम्। अथवा ध्यानस्य विष्णुमयत्वं विष्णुमात्रगोचरत्वं विषयान्तर- ादेवमनुष्यादितः करणानां प्रत्यहारे सत्येवेति पूर्ववाक्ये तावदुक्तम्। ध्यातुः रुद्रतादात्म्य- वना च रुद्रवत् स्वात्मनः परमात्मनि प्रतिष्ठापने कृत एव भवितुमर्हतीति द्वितीयवाक्ये यथा- ार्थं तद् विवक्षितम्। मोक्षार्थध्येयेशानध्यानञ्च नादान्ते परमात्मनि प्रतिष्ठान एव, न पुनः दार्थापरिचये इति तृतीयवाक्ये दर्शितमिति प्रतिनियतनिर्देशोपपत्तिर्विमृश्या। तृतीयवाक्यस्य दार्थसंग्रहवर्णितोऽर्थ उपरि दर्शयिष्यते। एवं, 'न क...

**संप्रस्तूयन्ते सर्वाणि चेन्द्रियाणि सह भूतैः । १६. न कारणं कारणानां ध्याता । १७. कारणं तु ध्येयस्सर्वैश्वर्यसंपन्नः सर्वेश्वरः शम्भुराकाशम**

भूतेन्द्रियैस्सहोत्पद्यन्ते । अत उत्पत्तिमत्त्वादेषां न प्रकर्षेण ध्यातव्यत्वमित्य ननु सर्वकारणत्वेन प्रसिद्धयोर्ब्रह्मरुद्रयोः कुतो न प्रध्यातव्यत्वमित्यत्राह—न व ........ ॥ **ध्याता** ब्रह्मा कारणभूतोऽपि, पूर्वत्र 'ध्याता रुद्रः' इति ध्यातृत्वेनो रुद्रः[1] जगत्कारणभूतोऽपि जगत्कारणकारणं न भवतीत्यर्थः ।

पुनः किं ध्येयमित्यत्राह—**कारणं तु....** । **कारणं** चेतनाचेतना प्रपञ्चकारणभूतः **सर्वेश्वरः** सर्वनियन्ता **सर्वैश्वर्यसंपन्नः** सर्वेण=सर्वविधेन ऐश्व शेषित्वेन, मातापितृनृपलोकपालादिनिष्ठेनापि शेषित्वेन, संपन्नः, मातापित्रादि च यः स एव, शं भवत्यस्मादिति **शम्भुः** मोक्षप्रद इत्यर्थः । स एव हृदयाकाश ध्यातव्यः, न त्वीशानशब्दवाच्यः संहर्ता रुद्र इत्यर्थः ।

[ "इति नारायणः शम्भुर्भगवान् जगतां पतिः ।
संदिश्य विबुधान् सर्वानजायत यदोः कुले ॥"

इति शम्भुशब्दस्य भगवत्परतायाः तदुत्पत्तेरवताररूपतायाश्चोपबृंहितत्वादत्रत्य शब्दोऽपि भगवत्परः । **ब्रह्मविष्णुरुद्रेन्द्रा** इति श्रूयमाणाऽपि विष्णोरुत्पत्तिर

1. रुद्रश्च- क.

नन्वस्तु नाम विष्णोर्जन्म अवतारभूतम् । अथापि तस्य रुद्रादिवदुपास्यत्वं न सर्वकारणस्य पुरुषस्य परवासुदेवस्यैवोपास्यत्वविधानादिति चेन्न—विष्णुपुराणे, 'नैसर्गि वै बोधस्तेषामप्यन्यतो यतः' इत्येवं परतन्त्रोपासनस्यैव मोक्षहेतुत्ववर्णनात् । वि देवाभिन्नतयाऽनुपास्यत्वायोगाच्च । अत एव, ध्यानं विष्णुः इति परध्यानस्य विष्णुरूप वोक्तम् । 'विभवार्चनाद् व्यूहं प्राप्य व्यूहार्चनात् परं ब्रह्म वासुदेवाख्यं प्रतिपद्यन्त' विष्णूपासनं क्रमिकमुक्तिहेतुरपि स्यात् । तथा फलान्तरहेतुरपि; परोपासनं पुनः साक्ष हेतुरिति तत्र श्रुतेरादरः । किञ्च यथा परिच्छिन्नविभवः प्रतीयते विष्णुः, तथा तस्य मु पास्यत्वमेव । परवासुदेवाभिन्नतया ताद्रूप्येणोपासनं तु नासंमतम् । ब्रह्मरुद्रादीना ताद्रूप्येणोपासनमिष्टम् । परंतु ताद्रूप्यमिदं प्रमाणवलात् तत्र शरीरात्मभावरूपम्, विष्णु साक्षादभेद इति विशेषः । अत एव, 'विष्णोःसकाशादुद्भूतं जगत्तत्रैव च स्थित' इ परमर्षिपराशरसूक्तिरिति ।

[1]१८. ध्रुवं स्तब्ध्वाऽधिकं क्षणमेकम्, क्रतुशतस्यापि चतुस्सप्तत्या यत्
१, तदाप्नोति कृत्स्नमोंकार[2]गतिश्च सर्वध्यानयोगज्ञानानां यत् फलम्।

---

त द्रष्टव्यम् ? ] "अजायमानो बहुधा विजायते", "पिता पुत्रेण पितृमान्
योनौ" इत्यादिश्रुतिरप्यत्रानुसंधेया ।

**एकं क्षणमधिकं वा ध्रुवं = स्थिरं परमात्मानं स्तब्ध्वा नैश्चल्येन ध्यात्वा**

---

**अजायमान** इति वाक्यमिदं सर्वव्याख्यानाधिकरणश्रुतप्रकाशिकायामथर्वशिखानिर्वाहे
क्योपादानस्थल इव अत्रापि विष्णूत्पत्तेरवतारूपत्वस्थापनार्थमेव प्रवृत्तम् अन्यथा असंगतेरिति,
[ त्रिचतुरवाक्यव्याख्यानानन्तरनिविष्टः "इति नारायणः शम्भुः" इत्यादिः 'द्रष्टव्य'मि-
' ग्रन्थोऽत्रैव भाव्य इति अत्रैव मुद्रितः । शम्भुशब्दस्याप्यत्रैव सत्त्वात् उपरितद्ग्रन्था-
च्च ।

अत्रेदमथर्वशिखारहस्यम्—कश्च ध्येय इत्यस्य साक्षात् समानाकारमुत्तरम्—**कारणं तु ध्येय**
तच्छेषतया प्रवृत्ते, 'ध्यायीतेशानं प्रध्यायितव्यम्' इति वाक्ये इदमुच्यते । ईशानं ध्यायेत्।
मीशानम् ? न रुद्राभिधमीशानम्, किंतु प्रध्यातव्यम्, प्रकर्षेण ध्यानार्हम्, प्रकर्षेण ध्येयतया
ाप्तमीशानम् । प्रकृष्टध्यानं नाम मोक्षार्थध्यानम् । प्रसिद्धेशानव्यावर्तनाय **प्रध्यातव्यमि**ति
, कुतस्स रुद्र ईशानः प्रध्यातव्यो न भवतीत्याशङ्कां परिहर्तुं **सर्वमिदमि**ति वाक्यं

---

1. आकाशमध्यइत्येतदनन्तरं पुनर्ध्येयपदं नास्तीति श्रुतप्रकाशिकाशैल्याऽप्यवगम्यते,
मित्यारभ्य वाक्यैक्यात् । 2. **ओंकारगत**मिति क्वचित् पाठः ।

अत्र पाठभेदादेस्सुगमत्वाय आनन्दात्मशिष्यशङ्करानन्दकृतप्रतिपदव्याख्यातालकोशग्रन्थात्
यांश उद्ध्रियते—**अर्धमात्रा अर्धं** बिन्दुः । तद्रूपा मात्रा । **संवर्तकोऽग्निः** संकर्षणः
लः । **भास्वतीः स्मृताः** । भास्वत्यो विचित्रवर्णाः प्रकाशादिकाः; स्मृताः चिन्तिताः ।
[ महदाख्यम् । **शुभाशुभा** पुण्यपापरूपा, एतन्नाम्नी च । **चतुष्पादः** ऋग्वेदादिः
ादः । **चतुश्शिरः** ब्रह्मविष्णुरुद्रपुरुषरूपशिरस्कः । चतुश्शिरा एव चतुश्शिरः[1],
**र्धमात्रः** । गार्हपत्यादयश्च एवार्धमात्रा इति । **प्लुतप्रयोगेण** प्लुतातीतत्वेन प्रणवस्य
ेण । प्राणानुद्दिश्य **प्रलीयते** लयं याति । प्राणान् स्वस्मिन् लयं नयतीति वा । **प्रणामय**ते
ण प्रापयति । **चतुर्धावस्थितः** पृथिव्यादिरूपैश्चतुष्प्रकारावस्थितः । **इति** अस्मात् कारणात्
ादेवयोनिः । **सर्ववाक्यवस्तु** सर्वनामरूपम् **प्रणवात्मकम्** प्रणवस्वरूपम् । **देवाश्चे**ति

---

[1]चतुश्शिरआदिपदानामसङ्ग्राप्थे विशेषव्याख्यानादर्शनात् चतुरर्धमात्रत्वादेव चतुरक्षर

**१९. ओंकारो वेदपर ईशो वा। २०. शिव एको ध्येयश्शिवं सर्वमन्यत् परित्यज्य। २१. समाप्ताऽथर्वशिखेति।**

---

[1] क्रतुशतचतुस्सप्ततिफलमाप्नोति कृत्स्नम् **ओंकारगतिं** ओंकारप्राप्यं फलञ्चाऽऽ तीत्यर्थः। सर्वध्यानयोगज्ञानानां यत् फलम्, तत् फलं प्राप्नोतीत्यर्थः। ध्यानकरणमोंकारं स्तौति **ओंकारः**—। सर्वस्माद्वेदात् ओंकारः श्रेष्ठ इत्य सर्वफलप्रदाने **ईशः** शक्तश्चेत्यर्थः। **वा**शब्दश्चार्थे ॥

ध्येयमुपसंहृति—**शिवः**—**परित्यज्य**। अन्यत् सर्वं परित्यज्य।? नारायणः शम्भुर्भगवान् जगतां पतिः........विष्णोरुत्पत्तिरवताररूपेति द्रष्टव्यम् **शिवंकरः** [2] शिवकरः मोक्षपदश्शिव एव ध्येयः। अत्रत्य**शिवंकरः**श प्रसिद्धशिवव्यावृत्त्यर्थः ॥ वक्तव्यांशं (शो?) किमपि नावशिष्टमिति स श्रुतिराह—**समाप्ताऽथर्वशिखेति**।

1 ध्यात्वा यत् फलं तच्चाप्नोति. क. 2. शंकरः ग. 3. शिवशंकरशब्द
* इदं गवयं पूर्णं पूर्वपुटे मुद्रितम्।

---

देवादयोऽपि प्रणवात्मका इत्यनेन प्रकारेण। **संधत्ताम्** संधत्त = सम्यग् ध्यानं कुरुत। **स्था** स्थानशब्दाभिधेयेभ्यः। **ध्यायिभ्यः** ध्यानशीलेभ्यः अधिकारिभ्यः (चतुर्थी) [अत्र 'सर्वेभ्य शरीरे स्थनेभ्यः प्रकाशयतीति प्रकाशः प्रकाशः प्रकाशेभ्यः। सदोमिति विद्युमद् द्यं मुहुर्मुहुरिति विद्युद्वत् प्रनीयात् इति पाठः। दिशं दिशमिति द्विः पाठो नास्ति। व व्यापयतीति पाठः] जागर्ति जागरणं करोति। तेन सा जागरणम्। [अत्र **मात्रे**त्यादेः कम पवर्ण्यं, 'मात्राचतुष्टयान्नाधिकमित्यर्थः' इति भावो वर्णितः।] सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्राद ते ब्रह्मादयः **संप्रसूयन्ते** स्वाभिन्नं सर्वमिदमुत्पादयन्ति। [अत्रापि **सर्वं** इति पदं किमीश्वरस्वरूपमिन्द्रियभूतमायाध्यातृरूपमन्यद्वेत्यत्राह **सर्वाणि** चेति। **कारणमिति** च्यते। इन्द्रियादि न ध्येयमित्यर्थः। किंतु कारणमेव ध्येयम्। कारणमिह मायाया अ [सर्वेश्वरश्चेति चकारसहितपाठः] शम्भुः सुखकारणम्। **आकाशमध्य** इति। उपर्यु आकाशमध्यं स्तब्धतां नीतमेत्यर्थः। ओंकारो यत् फलं **वेद** जानाति, तदप्याप्नोति। **प** **वा** परः ईश एवेति ॥

न प्रज्ञातव्यं प्रज्ञायेत ॥ ५७ ॥

न वाचं विजिज्ञासीत; वक्तारं विद्यात् ॥ ५८ ॥ न गन्धं विजिज्ञासीत; घ्रातारं विद्यात्। न रूपं विजिज्ञासीत; रूपं विद्वांसं (रूपविद) विद्यात् ॥ ५९ ॥ न शब्दं विजिज्ञासीत; श्रोतारं विद्यात्। नान्नर(स) विजिज्ञासीत; अन्नरसविज्ञातारं विद्यात्। न कर्म विजिज्ञासीत; कर्ता(रं) विद्यात्। न सुखदुःखे विजिज्ञासीत; सुखदुःखयोर्विज्ञातारं विद्यात्। नानन्दं न रतिं न प्रजातिं विजिज्ञासीत; आनन्दस्य रतेः प्रजातेर्विज्ञातारं विद्यात्। नेत्यां विजिज्ञासीत; एतारं विद्यात्। न मनो विजिज्ञासीत; मन्तारं विद्यात्। ता वा एता दशैव भूतमात्राः अधिप्रज्ञम्

---

एवं प्रज्ञाशब्दितस्य जीवस्य भूतमात्राव्याप्तप्रकारकथनमुखेन आत्मानात्मविवेकं प्रदर्श्य, 'अन्या वाचो विमुञ्चथ' इत्युक्तरीत्या भूतमात्राशब्दितानात्मविज्ञा(नं) परिहर्तव्यमित्याह **न प्रज्ञातव्यं प्रज्ञायेतेति**। ज्ञात्रात्मव्यतिरिक्तः अनात्मभूत(ः) विषयो न ज्ञातव्य इत्यर्थः ॥ ५७ ॥

तदेव प्रपञ्चयति **न वाचं—विद्यात्**। अत्र वाक्छब्दः प्रकरणानुगुण्यात् नामपरः। **वक्तारम्** उक्तरीत्या मनोधिष्ठितवागिन्द्रियजन्याभिलपनक्रियया नामव्यासार(क)मात्मानमेव विद्यात्। वक्तृजीवशरीरकपरमात्मानं विद्यादिति यावत्। एमुत्तरत्रापि द्रष्टव्यम् ॥ ५८ ॥ **रूपं विद्वांसं** रूपं पश्यन्तं विद्यादित्यर्थः ॥ ५९ ॥

**ता वा एताः—सिद्ध्येत्**। नामगन्धरूपशब्दरसकर्मसुखदुःखानन्दरति-प्रजातीत्याज्ञातव्यलक्षणा दश भूतमात्राश्च, तद्ग्राहिवाग्घ्राणचक्षुश्श्रोत्रजिह्वाहस्तशरीरोप-

---

**न प्रज्ञातव्यं प्रज्ञायेतेति**। पूर्वं, तस्यै धियो विज्ञातव्यमिति द्वयोः प्रसक्तत्वात् तत्र प्रज्ञाविरहे धियो न भवन्तीतिवत् प्रज्ञातव्यमपि न प्रज्ञायेतेत्युच्यत इति युक्तं व्याख्यातुम्। अथापि तदा, 'प्रज्ञाविरहे' इत्यध्याहारादिगौरवात् वक्ष्यमाणार्थस्य समुदायतो निर्देशः प्रथममिति योजनां वक्ष्यन् अवतारयति **एवं प्रज्ञाशब्दितेति**। तथा च **न प्रज्ञायेतेत्येतत्** निषेधविधिरूपम्, प्रज्ञातव्यः=विषयो न प्रज्ञातव्य इति भावः। वस्तुतः पूर्ववाक्ये **धिय** इति **विज्ञातव्यमित्येतद्विशेषणमेवाभिमतम्**। (५७)

**वक्तृजीवशरीरकेति**। यद्यपि वाक्यानीमानि जीवमात्रपराणि; उपरि **तद्यथा रथस्येति** परमात्मपरमिति सुवचम्—अथाप्यस्य केवलस्यानादेयत्वात् विशिष्टविवक्षा।

। प्रज्ञामात्रा अधिभूतम्। यद्धि(दि) भूतमात्राः न स्युः, प्रज्ञामात्राः न
:; यदि(द्वा) प्रज्ञामात्रा न स्युः, न भूतमात्राः स्युः । न ह्यन्यतरतो
। किञ्चन सिद्ध्येत्; नो एवैतन्नाना ॥ ६० ॥

तद् यथा रथस्यारेषु नेमिरर्पिता, नाभावरा अर्पिताः, एवमेवैता
मात्राः प्रज्ञामात्रास्वर्पिताः, प्रज्ञामात्राः प्राणेऽर्पिताः ॥ ६१ ॥

---

ादमनोलक्षणाः दश प्रज्ञामात्राश्चान्योन्याधाराः । वागादीन्द्रियाणामभावे नामादि-
द्रभावेन वागादिलक्षणप्रज्ञामात्राधीनसिद्धिकत्वात् नामादिभूतमात्राणाम्; नामादि-
मात्राणामभावे तद्व्यवहारफलकप्रज्ञामात्राशब्दितेन्द्रियाद्यनिष्पत्तेः । अतो ग्राह्यग्राह-
नयाधीनत्वात् सर्वलोकयात्रायाः **नो एवैतन्नाना** । **नाना**शब्दो विनार्थकः ।
त् ग्राह्यग्राहकजातं परस्पराविनाभूतमित्यर्थः । न हि ग्राह्येण विनाकृतं ग्राहकं
केण विनाकृतं ग्राह्यं कार्यक्षमं भवति। तस्मात् प्रज्ञामात्राशब्दितमपि भूत-
न्तर्गतमित्यर्थः ॥ ६० ॥

**तद् यथा रथस्य—प्राणेऽर्पिताः**। यथा रथस्य **नाभौ** रथचक्रमध्यवर्ति-
प्रकाष्ठविशेषे अरशब्दिता अर्पिताः; अत्र नेमिशब्दितं वलयाकारं काष्ठं यथा
तम्—एवं प्राणशब्दितपरमात्मनि प्रज्ञामात्राशब्दनिर्दिष्टाश्चेतना अर्पिताः ।
च भूतमात्राशब्दितग्राह्यग्राहकजातं सर्वं समर्पितमित्यर्थः ।

नन्वत्र प्रज्ञामात्राशब्देन, **यद्धि भूतमात्रा न स्युः न प्रज्ञामात्राः स्युः**
**; प्रज्ञामात्रा न स्युः न भूतमात्राः स्युरिति** पूर्ववाक्ये प्रज्ञामात्राशब्द-
र्दिष्टानां वागादीनां दशानामेव ग्रहणमुचितम् । न तु प्रज्ञात्माशया, 'यो वै प्राणः
प्रज्ञा' इति व्यवहितकेवलप्रज्ञाशब्दनिर्दिष्टजीवपरत्वमिति चेन्न — पूर्ववाक्ये
ोन्याधाराधेयभावप्रतिपादनदर्शनात् तत्र प्रज्ञामात्राशब्दस्य वागादिपरत्वेऽपि इह

---

**दश प्रज्ञामात्रा** इति । अत्र एकादशेन्द्रियमध्येऽन्तर्गतस्य त्वगिन्द्रियस्य तद्विषयभूतस्य
स्य च मूले त्यक्तत्वात् दशेत्युक्तिः । (६०)

प्रकृतोपासनोपास्याकाराणां मध्ये मुख्यप्राणस्य निरूपणं प्रथमं कृत्वा अथ जीवं तदन्तर्गतं
ग्राहकैकीभावास्पदं निरूप्य तस्येतरवर्जनेनोपास्यत्वमुपवर्ण्य, तदुपासनमपि तद्विशिष्ट-
ात्मोपासनरूपमेव कार्यमिति स्वाभिमतव्यक्तये संप्रति तदधिकं परमात्मानमपि सदृष्टान्तं
नयितुमारभते तद् यथेति । 'मात्राशब्दः संघातैकदेशपर' इति श्रुतप्रकाशिका ॥ ६१ ॥

**स एष प्राण एव प्रज्ञात्मा (प्राज्ञ आत्मा) आनन्दोऽजरोऽमृतः ।। ६**
**स न साधुना कर्मणा भूयान्; नो एवासाधुना कर्मणा कनीयान् ।।**
**एष ह्येवैनं साधु कर्म कारयति तम्, य[1]मेभ्यो लोकेभ्य :**
**नीषति[2] ।। ६४ ।।**

1. यमन्वानुनेषति. पा० 2. उन्निनीषते. शां.

प्रज्ञामात्राशब्दनिर्दिष्टस्य भूतमात्राश्रितत्वाप्रतिपादनात् प्राणशब्दितपरमात्माश्रित प्रतिपादनात प्रज्ञामात्राशब्दो जीवपर एव । पूर्ववाक्ये बाधकबलात प्रज्ञा मुख्यार्थत्यागेऽपि इह मुख्यार्थत्यागे कारणाभावात् । यथाऽस्मिन् 'यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदायुः', 'अथास्मिन् प्राण एवैकधा 'एतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते' इति त्रिष्वपि वाक्येषु मुख परमात्मजीवपरत्वेन भिन्नार्थकत्वम्, एवं, 'प्रज्ञैवास्या एकमङ्गमुदूढमित्यत्र (मुख 'न हि प्रज्ञापेता वाङ् नाम किञ्चिन् प्रज्ञापयेत्', 'दशैव भूतमात्रा अधिप्रज्ञ वाक्येषु जीवमनइन्द्रियरूपार्थत्रयविषये दृष्टप्रयोगस्य प्रज्ञाशब्दस्य अर्थौचित्य णैवार्थस्य वर्णनीयत्वात् । न चैकवचनान्तप्रज्ञाशब्दनिर्दिष्टस्य जीवस्य बहुव प्रज्ञामात्राशब्देन परामर्शो न युक्त इति वाच्यम् – सद्विद्यायाम्, 'स्वमपीतो स्यैकवचनान्तशब्दनिर्दिष्टस्य जीवस्य, 'सति संपद्य न विदु'रिति बहुवचना निर्देशवदुपपत्तेः । एतत् सर्वं श्रुतप्रकाशिकायामिन्द्रप्राणाधिकरणे स्पष्टम्

**स एष प्राज्ञ आत्मा आनन्दोऽजरोऽमृतः** । प्राज्ञ एव निरुपाधिकसार्वज्ञ्याश्रयः । निरुपाधिकानन्दत्वाजरत्वामृतत्वाश्रयः ।। ६२ ।।

**स न साधुना—कनीयान्** । पुण्यपापकृतोत्कर्षापकर्षशून्य इत्यर्थः

**एष ह्येव – उन्निनीषति** । यं पुरुषमेभ्यो लोकेभ्यः ऊर्ध्वं भगवः मिच्छति, तं पुरुषं भगवल्लोकप्राप्तये साधुकर्म कारयति । कर्मणां भगवल्ल योगित्वञ्च तद्धेतुभूतविद्याविरोधिपापनिरसनद्वारा ।। ६४ ।।

**स एष प्राण एव प्रज्ञात्मेति** पाठ एव श्रीभाष्य–भाष्यान्तरादृतः ; **न प्राज्ञ आत्मेति** । (६२)

**एष ह्येवैनमसाधु कर्म कारयति 'यमधो निनीषति[2]' ॥ ६५ ॥**
**एष लोकपाल एष लोकाधिपतिरेष सर्वेशः[3] ॥ ६६ ॥**
**स म आत्मेति विद्यात् । स म आत्मेति विद्यात् ॥ ६७ ॥**

**इति कौषीतक्युपनिषदि तृतीयोऽध्यायः ॥**

1. यमेभ्यो लोकेभ्योऽनुनुत्सते । 2. निनीषते. शां. 3. सर्वेश्वरः ।

---

**एष ह्येवैनमसाधु — अधोनिनीषति ।** यं पुरुषमेभ्यो लोकेभ्यः अधः यितुमिच्छति, तमसाधु कर्म कारयति । यथा साधुकर्मणां ब्रह्मोपासननिष्पादन- । उन्नयनहेतुत्वम्, एवमसाधुकर्मणामप्युपासनप्रतिबन्धद्वारा अधोनयनहेतुत्वम् । ञ्च **भगवता भाष्यकृता,** "पापस्य ज्ञानोदयविरोधित्वम्, 'एष एवासाधु कारयति तं यमधो निनीषति' इति श्रुत्याऽवगम्यते" इति । विवृतञ्च **ासार्यैः,** "कर्मणामुन्नयनहेतुत्वमुपासननिष्पादनरूपमिति तद्विपरीतमधोनयन- ासनप्रतिबन्धरूपमिति स्फुटतरमवगम्यते" इति ॥ ६५ ॥

**एष — सर्वेशः । लोकपालः** लोकरक्षकः । अत्र **व्यासार्याः, "लोकाधि- तः** लोकस्वामी । **सर्वेशः** सर्वनियन्ता । ननु 'पा रक्षणे' इति धातोः पतिशब्दः । [ कथमत्र शेषिवाचित्वम्? उच्यते — न हि सर्वत्रावयवशक्तिरेव रूढिशक्ति- त्यस्ति । गमेर्डो इति व्युत्पत्त्या गोशब्दस्य सकलजङ्गमवाचित्वप्रसङ्गात्; स्थिताया : अवाचकत्वप्रसङ्गाच्च । अतः शेषिणि पतिशब्दो रूढः । अन्यथा, 'वृद्धौ च तापितरौ साध्वी भार्या सुतः शिशुः । अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत्' ते पितुः संरक्षके पुत्रे पतिशब्दव्यवहारप्रसङ्गात्" इत्यूचुः ॥ ६६ ॥

**स म आत्मेति विद्यात् ।** पूर्वोक्तगुणविशिष्टः स्वान्तर्यामीति प्रति- त्व्यः । यद्वा अस्मिन्नेव वाक्ये पूर्वोक्तत्वाष्ट्रहननादिकृतलेपशून्यत्ववक्तृत्वघ्रातृत्वादि- ़णकजीवविशिष्टतया आयुष्ट्वेन्द्रियनिःश्रेयसहेतुत्वशरीरोत्थापकत्वादिगुणविशिष्टप्राण-

---

एवमुपास्याकारान् सर्वान् क्रमेण प्रदर्श्य तावद्विशिष्टोपासनामेकेन वाक्येन विधत्ते **स म आत्मेति विद्यादिति । मामित्यनेन** पूर्वमस्मदर्थान्तर्यामिपर्यन्तग्रहणम्; अन्यथा समनन्तर- ़णानामपि हिततमोपासनकर्मत्वादेरिवानन्वयादिति विशदयितुं **म आत्मेति** विभज्य कथनम् । **ारीरात्मभावसंबन्धेनेन्द्रविशिष्टपरमात्मोपासनमेव** विधित्सितमिति ध्येयम् ॥

विशिष्टतया आनन्दत्वामृतत्वादिस्वरूपेण च विशिष्टस्य स्वात्मत्वेनोपासनं हि
एवंसति अनेकोपासनविधानकृतवाक्यभेदशङ्काया नावकाश इति द्रष्टव्यम् ।
रध्यायपरिसमाप्त्यर्था ।

इदञ्च वाक्यं समन्वयाध्याये प्रथमपादे चिन्तितम्—'प्राणोऽस्मि
तं मामायुरमृतमित्युपास्स्व' इत्यत्र मामितिशब्देन प्राणशब्देन च निर्दिश्यः
एव । इन्द्रप्रयुक्तस्य मामितिशब्दस्य तद्विषयत्वावश्यम्भावात् इति पूर्वपक्षे
उच्यते । "प्राणस्तथाऽनुगमात्" । प्राणः परमात्मा । परमात्मत्वसाधकान
मत्त्वेन तस्यास्मिन् प्रकरणे अनुगतत्वात् । 'स एष प्राण एव प्रज्ञात्मा अ
जरोऽमृतः' इति [हि?] श्रूयते । "न वक्तुरात्मोपदेशादिति चेदध्यात्मस
ह्यस्मिन्" । त्वाष्ट्रवधादिना प्रज्ञातजीवभावस्येन्द्रस्य वक्तुः, 'मामेव विजानी
स्वात्मत्वेनोपदिश्यमानः नेन्द्रात् जीवादधिको भवितुमर्हतीति चेन्न—अस्मि
परमात्मसंबन्धिनां धर्माणां बहुत्वमुपलभ्यते । हिततमोपासनकर्मत्वम्, साध्वसाधु
यितृत्वम्, 'भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः' इति
वर्गाधारचेतनवर्गाधारत्वमानन्दत्वमजरत्वममृतत्वं लोकाधिपतित्वम् एवमादयो
परमात्मसंबन्धिन उपलभ्यन्ते । अतो भूयोधर्मानुग्रहायास्य प्रकरणस्य परम
मेव वक्तव्यम् । तर्हि इन्द्रस्य, 'मामुपास्स्वे' ति निर्देशः कथमुपपद्यत इत्य
"शास्त्रदृष्ट्या तूपदेशो वामदेववत्" । 'य आत्मनि तिष्ठन्नात्मनो
इत्यादिशास्त्रेण परमात्मानं स्वात्मानं दृष्ट्वा शरीरवाचिनाञ्च शब्दानां शरी
ज्ञात्वा, मामुपास्स्वेत्युपदिष्टवान् । यथा हि साक्षात्कृतस्वात्मभूतपरमात्मतत्त्वो
'अहं मनुरभवं सूर्यश्चे' ति स्वात्मनि मन्वादिभावमुपदिष्टवान्—न हि तत्र
भावः स्वस्वरूपगतो वामदेवेनोपदिष्टः ; अपितु स्वात्मभूतपरमात्मगतः—
मुपदेश इति भावः । "जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रि
तद्योगात्" । त्वाष्ट्रवध—वक्तृत्वादिजीवलिङ्गानाम् आयुःप्रमुत्वशरीरोत्थापक
श्रयत्वादीनां मुख्यप्राणलिङ्गानां चोपन्यासः किमर्थ इति चेत्—इन्द्ररूपजीव
तया प्राणरूपाचेतनशरीरकतया स्वरूपेण चोपासनार्थं चेतनाचेतनधर्मा
धर्माणाञ्च कीर्तनम् । त्रिविधञ्चोपासनं प्रकरणान्तरेष्वप्याश्रितम्, यथा तै

४

अथ चतुर्थोऽध्यायः ॥

**गार्ग्यो हवै बालाकिरनूचानः संस्पष्ट आस ॥ १ ॥**

**सोऽवसदुशीनरेषु सत्त्वमत्स्येषु कुरुपाञ्चालेषु काशीविदेहे-**
**।॥ २ ॥**

**स हाजातशत्रुं काश्यमेत्योवाच ॥ ३ ॥, ब्रह्म ते ब्रवाणीति ।**

---

ं ज्ञानमनन्तं ब्रह्मे' ति स्वरूपेण, 'सच्च त्यच्चाभव' दिति भोक्तृभोग्यलक्षण-
ाचेतनशरीरकतया चोपासनम् । एवमिहाप्युपासनात्रैविध्यं युज्यत इति
म् ॥ ६७ ॥

इति कौषीतक्युपनिषत्तृतीयाध्यायप्रकाशिका ।

४

**गार्ग्यो** —— **आस** । बलाकस्यापत्यं **बालाकिः** गोत्रतो **गार्ग्यः**,—
**ूचानः** अङ्गाध्यायी । 'अङ्गाध्याय्यनूचानः' इति स्मृतेः । **संस्पष्टः** सम्यक्
ग्रया प्रख्यातः—एवम्भूतस्सन् **आस** बभूव ॥ १ ॥

**सो – इति** । **सः** बालाकिः उशीनरेषु सत्त्वप्रचुरमत्स्यदेशेषु कुरुपाञ्चालेषु
शीविदेहेषु **उवास** (?) उषितवान् । **इतिशब्दः** प्रकारवचनः । एवञ्जातीय-
ष्वन्येष्वपीत्यर्थः ॥ २ ॥

**स – उवाच** । अजातशत्रुनामानं काशीराजमभिगत्योवाच ॥ ३ ॥
मिति ? ब्रह्म ते ब्रवाणीति ।

---

४

समन्वयाध्याये चतुर्थपञ्चमे 'जगद्वाचित्वा' दिति सूत्रेण एतत्कौषीतकिश्रुतिगतस्य, 'यस्य
तत् कर्मे'ति कर्मपदस्यार्थनिर्धारणात् तदधिकरणं कौषीतकिबालाक्यजातशत्रुसंवादमेव प्राधान्ये-
ाधिकृत्य प्रवृत्तम् ; न तु बृहदारण्यकगतं तम् । स तु, 'अपि चैवमेके' इति तत्रैव सूत्र-
ण्डेन स्पृष्टः ।

**अनूचानः अङ्गाध्यायी**ति । अङ्गिभूतस्वाध्यायाध्ययनमर्थसिद्धम् । (१)

**तं होवाचाजातशत्रुः, 'सहस्रं दद्म[1] एतस्यां वाचि ; जनकं इति ह वै जना धावन्ती' ति ॥ ४ ॥**

**स होवाच बालाकिः, 'य एवैष आदित्ये पुरुषः, तमेवाहः इति ॥ ५ ॥ तं होवाचाजातशत्रुः, 'मा मैतस्मिन् [2]संवादर्र बृहन् (त) पाण्डरवासाः अतिष्ठाः सर्वेषां भूतानां मूर्धेति वा उ**

1. दद्मस्त एतस्यां 2. समवादिष्ठाः पा० सर्वत्र.

---

**तं होवाच—धावन्तीति ।** एतस्यामेव वाचि निमित्ते गवां प्रयच्छामि । सर्वेऽपि ब्रह्मविदः, जनक एव ब्रह्म शुश्रूषुः दाता चेति समीपमेव धावन्ति । भवांस्तु मत्समीपमागत्य, ब्रह्म ते ब्रवाणीत्युक्तवान् । वाक्येन तोषिता वयं सहस्रं प्रयच्छाम इति भावः ॥ ४ ॥

**स – उपास इति ।** आदित्यमण्डलान्तर्वर्तिनं पुरुषं ब्रह्मेत्यहमुपासे त्वमपि तमेवोपास्स्वेति भावः ॥ ५ ॥

**तं ह – । मा** मां प्रति **एतस्मिन्** आदित्यवर्तिपुरुषविषये संव कारय । अज्ञाते हि विषये संवादः कारयितव्यः । अयं तु ज्ञात कथमित्यत्राह, **बृहन् पाण्डरवासाः सर्वेषां भूतानां मूर्धेति वा उ**

---

जनको **जनक** इति द्विः प्रयोगेऽर्थविशेषमभिसंहितं दर्शयति **जनक ए शुश्रूषुः दाता चेति** । (४)

अब्रह्मज्ञेन बालाकिना आदित्यपुरुषादयः षोडश क्रमेण ब्रह्मत्वेन कीर्त्यन्ते **आदित्ये पुरुष** इत्यादिना । **ब्रह्म ते ब्रवाणीत्युपक्रमात् तमेवाहमुपासे** इति स त्वनोपासनं विवक्षितम् । अजातशत्रुस्तु यथावस्थितब्रह्मवेदित्वात् तदनभ्युपगमेन **मा मै संवादयिष्ठाः** इत्याह । तदर्थश्च मद्विदितार्थसंवादानुकूलव्यापारवान् मा भूरिति । पुरुषादितत्त्वं मया सुज्ञातम् । त्वया च तदन्यथा ज्ञातम् । अतः त्वदीयो वादः मद संवादो न भवति । संवादापेक्षा च अन्यथा गृहीतांशत्यागेन वास्तवांशशिक्षायै भवेत् अं ज्ञत्वे । अहं तु सम्यग् जानामि ; त्वमेव त्वन्यथा गृहीतवानसि । अतो मम संवादसंपत्त्यै व्यापरितव्यमिति भावः । **संवादं मा कारयेति** । मदर्थस्य संवादः त्वत्तोऽधि मदुक्तये मा यतस्वेत्यर्थः । **अज्ञाते हीति** । अत्र वक्तव्यं **बृहदारण्यकपरिष्कारे** : यद्वा **संवादः** संमतिः विषयस्य मया अज्ञातत्वे हि त्वदुपदेशमङ्गीकुर्याम् । त्वच्च मामज्ञ ज्ञातत्वात्तु विपरीतार्थं त्वदुक्तं न संमन्येयेत्यर्थः । (६)

से इति ॥ ६ ॥ स यो हैतमेवमुपास्ते, अतिष्ठाः सर्वेषां भूतानां मूर्धा ते ' ।

स होवाच बालाकिः, 'य एवैष चन्द्रमसि पुरुषः, तमेवाहमुपासे' इति । ोवाचाजातशत्रुः, 'मा मैतस्मिन् संवादयिष्ठाः । सोमो राजा अन्नस्यात्मेति अहमेतमुपास इति । स यो हैतमेवमुपास्ते, अन्नस्यात्मा भवति ' ॥ ७ ॥

स होवाचाजातशत्रुः, 'य एवैष विद्युति पुरुषः, तमेवाहमुपासे' इति । होवाचाजातशत्रुः, 'मा मैतस्मिन् संवादयिष्ठाः । तेजस्यात्मेति वा मेतमुपासे इति । स यो हैतमेवमुपास्ते, तेजस्या[1]त्मा भवति ' ॥ ८ ॥

स होवाच बालाकिः, 'य एवैष स्तनयित्नौ पुरुषः, तमेवाह[2]मुपासे' । तं होवाचाजातशत्रुः, 'मा मैतस्मिन् संवादयिष्ठाः । शब्दस्यात्मेति वा ्मेतमुपास इति । स यो हैतमेवमुपास्ते, शब्दस्यात्मा भवति ' ॥ ९ ॥

1. तेजस आत्मा. 2. अहं ब्रह्मोपासे.

ास ' इति । वैशब्दोऽवधारणे । बृहन् महान् । पाण्डराणि किरणरूपाणि ांसि यस्य सः पाण्डरवासाः । आदित्यकिरणानां नानारूपत्वात् पाण्डरवासस्त्वमिति ्व्यम् । बृहदारण्यके बालाक्यजातशत्रुसंवादे बृहत्त्वपाण्डरवासस्त्वे चन्द्रधर्मतया ; इह तु आदित्यधर्मतया उक्ते इति विशेषः । अतिष्ठाः सर्वमपि कार्य- तेक्रम्य तिष्ठतीति अतिष्ठाः । सर्वेषां भूतानां मूर्धा श्रेष्ठः ॥ ६ ॥

तदुपासनस्यानुरूपं फलमाह स यो—भवति ।

स होवाच—भवति । अन्नस्य व्रीहियवादिरूपौषधिवर्गस्य । आत्मा । यत्वाद्वा, चन्द्रमसः सर्वरसात्मत्वेन तत्स्वरूपत्वाद्वा, अमावास्यायां चन्द्रस्य षौषध्यनुप्रवेशश्रवणाद्वा चन्द्रस्य अन्नात्मत्वम् ॥ ७ ॥

तेजस्यात्मा तेजस्विस्वरूप इत्यर्थः । तेजस आत्मेति पाठेऽपि स वार्थः ॥ ८ ॥

शब्दस्यात्मा । स्तनयित्नुसहितस्य मेघस्य शब्दप्रधानत्वात् शब्दात्मत्वम् । ष्टं स्पष्टम् ॥ ९ ॥

स होवाच बालाकिः, 'य एवैष आकाशे पुरुषः, तमेवाहमु इति । तं होवाचाजातशत्रुः, 'मा मैतस्मिन् संवादयिष्ठाः । पूर्णम ब्रह्मेति वा अहमेतमुपास इति । स यो हैतमेवमुपास्ते, प्रजया पशुभिः । नो एव स्वयम् । नास्य प्रजा पुरा क प्रवर्तते' ॥ १० ॥

स होवाच बालाकिः, 'य एवैष वायौ पुरुषः, तमेवाहमु इति । तं होवाचाजातशत्रुः, 'मा मैतस्मिन् संवादयिष्ठाः । इन्द्रो वैकु पराजिता सेनेति वा अहमेतमुपास इति । स यो हैतमेवमुप जिष्णुर्हवा अपराजिष्णुरन्यतस्त्यजायी[1] भवति' ॥ ११ ॥

1. अन्यतस्तज्ज्यायान्—पा०

---

पूर्णत्वविशिष्टोपासनायाः फलम्, **पूर्यते प्रजया पशुभिरिति** । प्रयुक्तनिर्व्यापारत्वलक्षणाप्रवर्तित्वविशिष्टोपासनायाः फलम्, **नो एव स्वयमि** स्वयमपि, तत्पुत्रपौत्रादिकं वा न शास्त्रानुशिष्टशतायुष्कालात् प्राक् अस्मा प्रवर्तते । नास्य सन्ततावपमृत्युर्भवतीत्यर्थः ॥ १० ॥

**इन्द्रः** ईश्वरः । 'योऽयं पवते एष देवानां गृहाः' इति वायोर्देव प्रसिद्धेः लोकत्वेन वैकुण्ठसादृश्याद्वैकुण्ठत्वम् । मरुतां गणत्वप्रसिद्धेः **सेना** । जयशीलः । **अपराजिष्णुः** अपराजितः । **अन्यतस्त्यजायी** । अन्य अन्यतस्त्याः । शत्रव इति यावत् । तान् जेतुं शीलमस्य । 'सुप्यजातौ' इति शिष्टं स्पष्टम् ॥ ११ ॥

---

**पूर्णमप्रवर्तीति** । छान्दोग्ये गायत्रीविद्यायां (३-१२) मोक्षफलकं पूर्णत्व मुक्तम् । तत्राप्याकाशः प्राक् प्रस्तुतः ; ब्रह्मतुल्यतया कीर्तितश्च । (१०)

स होवाच बालाकिः, 'य एवैषोऽग्नौ पुरुषः, तमेवाहमुपासे' इति । तं होवाचाजातशत्रुः, 'मा मैतस्मिन् संवादयिष्ठाः । विषासहिरिति वा अहमेतमुपास इति । स यो हैतमेवमुपास्ते विषासहिर्हैवैष[1] भवति' ॥ १२ ॥

स होवाच बालाकिः, 'य एवैषोऽप्सु पुरुषः, तमेवाहमुपास' इति । तं होवाचाजातशत्रुः, 'मा मैतस्मिन् संवादयिष्ठाः । नाम्नस्त्वात्मेति वा अहमेतमुपास इति । स यो हैतमेवमुपास्ते, नाम्नस्त्वात्मा भवति' ॥ १३ ॥

इत्यधिदैवतम् । अथाध्यात्मम् ॥ १४ ॥ —

स होवाच बालाकिः, 'य एवैष आदर्शे पुरुषः, तमेवाहमुपासे' इति । तं होवाचाजातशत्रुः, 'मा मैतस्मिन् संवादयिष्ठाः । प्रतिरूप इति वा अहमेतमुपास इति । स यो हैतमेवमुपास्ते, प्रतिरूपो हैवास्य प्रजा स्वय-माजायते; नाप्रतिरूपः' ॥ १५ ॥

1. विषासहिर्वै एष—पा०

---

**विषासहिः** । सोढुमशक्यः शत्रुभिरित्यर्थः । मर्षयितेति वाऽर्थः ॥ १२ ॥

**नाम्नस्त्वात्मा** । नामाधिष्ठात्री देवतेत्यर्थः । शिष्टं स्पष्टम् ॥ १३ ॥

**इत्यधिदैवतम् । अथाध्यात्मम्** । देवतायामुपासनप्रकार उक्तः । आत्मन्युपासनप्रकार उच्यत इत्यर्थः ॥ १४ ॥

**प्रतिरूपः** । प्रतिबिम्ब इत्यर्थः । अस्य सन्ततावनुरूप एव पुत्रो जायते । नाननुरूपः । प्रतिबिम्बस्य कार्यकारणसंघातलक्षणात्मशब्दिताभिन्नत्वादध्यात्मान्तर्ग-तत्वमिति द्रष्टव्यम् ॥ १५ ॥

**प्रतिरूपो हैवास्य प्रजेति** । 'बिम्बादिवोत्थितौ बिम्बौ रामदेहात् तथा परौ' इत्युक्त-रीत्या स्वप्रतिबिम्बवत् स्वप्रजा भवतीत्यर्थः । तत्र शरीरसाम्यमात्रं न विवक्षितम्; किंतु सर्वा-शतः इत्याशयेन **अनुरूप एव पुत्रो जायते** इत्युक्तम् । (१५)

स होवाच बालाकिः, 'य एवैष प्रतिश्रुत्कायां पुरुषः, त‍
मुपास' इति। तं होवाचाजातशत्रुः, 'मा मैतस्मिन् संवादयिष्ठाः, द्विती
पगम इति वा अहमेतमुपास इति। स यो हैतमेवमुपास्ते,
[1]द्वितीयाम्; द्वितीयवान् भवति' ॥ १६ ॥

स होवाच बालाकिः, 'य एवैष शब्दः पुरुषमन्वेति, त
मुपासे' इति। तं होवाचाजातशत्रुः, 'मा मैतस्मिन् संवादयिष्ठाः,
रिति वा अहमेतमुपासे इति। स यो हैतमेवमुपास्ते, नो एव
नास्य प्रजा पुरा कालात् संमोहमेति' ॥ १७ ॥

स होवाच बालाकिः, 'य एवैष च्छायायां पुरुषः, तमेवाह
इति। तं होवाचाजातशत्रुः, 'मा मैतस्मिन् संवादयिष्ठाः। मृत्यु
अहमेतमुपासे इति। स यो हैतमेवमुपास्ते, नो एव स्वयम्, नास
पुरा कालात् प्रमीयते' ॥ १८ ॥

1. द्वितीयम्—पा०

---

**प्रतिश्रुत्कायां** प्रतिध्वनौ। **द्वितीयः** पूर्वशब्दापेक्षया द्वि
**अनपगमः** नापगच्छतीत्यनपगमः। **द्वितीयाम्** आत्मापेक्षया द्वितीयां
**विन्दते** लभत इत्यर्थः। **द्वितीयवान् भवति।** पुत्रेण द्वितीयवांश्च भवत
**विन्दते द्वितीयमिति** पाठे **द्वितीयं** पुत्रं विन्दते। अनपगमत्वोपासनाफ
**द्वितीयवान् भवतीति।** नित्ययोगे मतुप्। नित्यं पुत्रसहितो भवतीत्यर्थः

**पुरुषमन्वेति।** गुहादौ पुरुषशब्दानुकारिवर्णात्मकः प्रतिशब्द
**असुरिति वा अहमेतमुपास** इति। तादृशशब्दस्य प्राणबललभ्यतया असु
इत्यर्थः। **नो – एति।** स्वयं वा तत्सन्ततिर्वा अकाले मूर्च्छां मर
प्राप्नोतीत्यर्थः ॥ १७ ॥

**मृत्युरिति वा** इति। नीलत्वभयङ्करत्वादिमृत्युसादृश्यात् छा
मृत्युत्वेनोपासनमिति द्रष्टव्यम् १८ ॥

---

**प्रतिश्रुत्कायामिति।** **प्रतिश्रुत्का**पदेन प्रतिश्रुज्जनकदिग्ग्रहणं **युक्तम्;**
समानप्रकरणे **दिक्षु** इति श्रवणात्। (१६)

स होवाच बालाकिः, 'य एवैष शारीरः पुरुषः, तमेवाहमुपासे'
ते। तं होवाचाजातशत्रुः, 'मा मैतस्मिन् संवादयिष्ठाः। प्रजापतिरिति
अहमेतमुपासे इति। स यो हैतमेवमुपास्ते, प्रजायते प्रजया
शुभिः'॥ १९॥

स होवाच बालाकिः, 'य एवैष प्राज्ञ आत्मा येनैतत्सुप्तः [1]स्वप्नाया-
रति, तमेवाहमुपासे' इति। तं होवाचाजातशत्रुः, 'मा मैतस्मिन् संवाद-
ष्ठाः। यमो राजेति वा अहमेतमुपासे इति। स यो हैतमेवमुपास्ते,

1. स्वप्नया—पा०

---

**शारीरः**। शरीरे अहमित्यभिमन्यमानः पुरुषः शारीरः। तस्य पुत्र-
त्वादिलक्षणप्रजोत्पादकत्वरक्षकत्वादिना प्रजापतित्वम्। **प्रजया पशुभिः प्रजा-
ते**। प्रजया पशुभिश्च प्रकृष्टो जायत इत्यर्थः। शिष्टं स्पष्टम्॥ १९॥

**स होवाच**—। **प्राज्ञः** जाग्रद्दशायां प्रज्ञाशाली अयमात्मा **एतत्सुप्तः**—
तत् सुप्तं यस्य — एतादृशसुप्तिविशिष्टस्सन् — उपरतबाह्येन्द्रिय इति यावत् —
**न स्वप्नायाचरति** येन मनसा विशिष्टस्सन् स्वप्नाय प्रवर्तते स्वप्नात् (स्वाप्नान्?)
दार्थान् पश्यति, तत् मनो ब्रह्मोपास इत्यर्थः। **यमः**—। सर्वेन्द्रिययमयितृत्वात्

---

स्वप्नायेत्यत्र स्वप्नयेति पाठान्तरम्। 'आङ्याजयारामुपसंख्यानम्' इति (७-१-३९)
पाणिनीयवार्तिकात् स्वप्नेनेत्यत्र स्वप्नयेति अयाच्।

**तन्मनो ब्रह्मोपास** इति। ननु **तमेवाहमुपासे** इति पुल्लिङ्गतच्छब्दश्रवणात् प्राज्ञस्या-
त्मनो ग्रहणं युक्तम्। पूर्वोत्तरवाक्येषु च **य एवैष**इति यच्छब्दगृहीतस्यैव **तमेवाहमुपास**
इति उपास्यत्वेन ग्रहणात् इहापि तादृशस्य प्राज्ञात्मन एवोपासिकर्मत्वे वर्णनीये मनस उपासन-
वर्णनं कथमिति चेत् — उच्यते। अस्ति विशेषः। तथाहि — सर्वेष्वपि पर्यायेषु पुरुषविशेषाणा-
मुपास्यत्वमुक्तम्। तद्वदिह, 'यः पुरुषस्तमेवाहमुपासे' इति न श्रूयते। प्राज्ञस्यात्मन उपासना-
न्वयस्तु स्यात्, यदि अनुपपत्तिर्न स्यात्। यद्ययं प्राज्ञ आत्मा परमात्मा, तर्हि तस्य ब्रह्मत्वं
प्रामाणिकमिति तस्याब्रह्मत्वमजातशत्रुविवक्षितमयुक्तं स्यात्। अथ जीवात्मा, तर्हि, य एवैष
शारीरः पुरुष इति पूर्वपर्यायान्नातिरिच्यते। किञ्च य एवैष इति यच्छब्दप्रतिसंबन्धी चेत्
तमिति तच्छब्दः, तर्हि येनेत्यस्य कः प्रतिसंबन्धी। अतः य एवैष प्राज्ञ आत्मा, स एतत्सुप्त-
स्सन् येन मनसा चरति, तदुपासनमहं करोमीत्युच्यते। तमिति पुल्लिङ्गनिर्वाहः कथमिति
चेत् — मनसो मनःपदेनैव ग्रहणनियमाभावात्, येन करणविशेषेणेत्यर्थवर्णनसंभवादनुपपत्त्य-

सर्वं हास्मा इदं श्रैष्ठ्याय यम्यते' ॥ २० ॥

स होवाच बालाकिः, 'य एवैष दक्षिणेऽक्षन् पुरुषः त
मुपासे' इति। तं होवाचाजातशत्रुः, 'मा मैतस्मिन् संवादयिष्ठाः।
आत्मा [1]अग्नेरात्मा ज्योतिष आत्मेति वा अहमेतमुपासे इति।
हैतमेवमुपास्ते, एतेषां सर्वेषामात्मा भवति'।

स होवाच बालाकिः, 'य एवैष सव्येऽक्षन् पुरुषस्तमेवाह
इति। तं होवाचाजातशत्रुः, 'मामैतस्मिन् संवादयिष्ठाः। सत्य
विद्युत आत्मा तेजस आत्मेति वा अहमेतमुपासे इति। स यो ह
मुपास्ते, एतेषां सर्वेषामात्मा भवति' ॥ २१ ॥

1. अग्निरात्मा ज्योतिष्ट आत्मेति—पा०

---

मनसो यमत्वम्, श्रैष्ठ्याच्च राजत्वं द्रष्टव्यम्। श्रैष्ठ्याय यम्यते। अस्य
सर्वमपि भूतजातं यम्यते। यतत इति यावत् ॥ २० ॥

स ह — आत्मा भवति। दक्षिणाक्षिप्रतिबिम्बे नामाग्निज्योति
दृष्टौ नामाग्निज्योतिरात्मत्वं भवति। सव्याक्षिप्रतिबिम्बे सत्यविद्युत्तेजआ
सत्यविद्युत्तेजआत्मत्वं भवति ॥ २१ ॥

---

भावात्। ननु प्रज्ञाशब्दस्य मनःपरत्वमत्र पूर्वाध्याये दृष्टम्। अतः प्राज्ञ आत्मे
धिष्ठातृदेवताविशेषो गृह्यताम्। येनेति पदमपि तत्परमेव। प्राज्ञ आत्मेत्यत्र प्रज्ञात्मेत
स्यात्। बहुत्र तथाश्रवणात्। तथाच सुप्तः येन देवताविशेषेण स्वप्नाय चरति, एष प्र
थः, तमुपासे इत्यर्थोऽस्तु। एवञ्च स इति पदानध्याहारः, एतेषां पुरुषाणां कर्तेति
वाक्ये अस्यापि पुरुषत्वेन कीर्तनौचित्यञ्चेति चेत्— अस्तु कामम्। प्रकृतभाष्यस्यापि
परतायां नातीव क्लेश इति। ननु बृहदारण्यके शारीरात्ममात्रं कथितम्; न प्राज्ञा
वामाक्षिपुरुषत्रयम्। अतस्तत्रोक्तस्य शारीरात्मन एव चतुर्धा किञ्चिद्रूपेण विभाग
मतोऽस्तु। अतो न मनःपरोऽयं प्राज्ञात्मपर्याय इति चेत्—न—अन्यत्रोक्तमेवात्र व
निर्बन्धाभावात्। अस्तु वा तमिति पदं येनेति प्रागुक्तमनोविशिष्टवेषेण जीवपरम्।
ब्रह्मोपास इति भाष्यञ्च पुरुषविशेषणतया मनसोपि विवक्षादर्शकम्, न तु पुरुषस
चारकमिति। (२०)

**ततो ह बालाकिस्तूष्णीमास ॥ २२ ॥**

**तं होवाचाजातशत्रुः, 'एतावन्नु बालाके' इति ॥ २३ ॥**

**एतावद्धीति होवाच बालाकिः ॥ २४ ॥**

**त होवाचाजातशत्रुः, 'मृषा वै किल मा [1]संवादयिष्ठाः ब्रह्म ते ब्रवाणीति ॥ २५ ॥**

**स होवाच, 'यो वै बालाके एतेषां पुरुषाणां कर्ता, यस्य वैतत् कर्म, स वै वेदितव्य इति ॥ २६ ॥**

1. संवदिष्ठाः. पा०

---

**तूष्णीमास** । उत्तरापरिस्फूर्तेरिति शेषः ॥ २२ ॥

**एतावन्नु बालाक इति** । हे बालाके! एतावदेव खलु ते विदितमित्यर्थः ॥ २३ ॥

**एतावद्धीति** । एतावदेव मे विदितमित्युवाचेत्यर्थः ॥ २४ ॥

**मृषा वै** —। **ब्रह्म ते ब्रवाणीति** मृषोक्त्या मां मृषैव **संवादयिष्ठाः** संवादं कारितवानसि । एतावन्तं कालमब्रह्मवाद एव प्रवृत्त इत्यर्थः ॥ २५ ॥

तर्हि किं तत् वेदितव्यं ब्रह्मेत्यत्राह **स होवाच यो वै – वेदितव्य इति**। **वै**शब्दोऽवधारणे । त्वया ब्रह्मत्वेनोपदिष्टानामादित्यादिपुरुषाणां यः कर्ता = ते यत्कार्यभूताः; किं विशिष्याभिधीयते; यस्य प्रत्यक्षादिसन्निधापितं चिदचिद्रूपं समस्तं जगत् **कर्म** कार्यम् — क्रियत इति व्युत्पत्त्या **कर्म**शब्दः कार्यवचनः — स एव वेदितव्यः; न तु त्वदुपन्यस्ता आदित्यादय इति भावः ॥ २६ ॥

---

**मृषा वै किलेति** । अज्ञस्त्वं कथमभिज्ञ इव मत्संमतिं प्रतीक्षितवानिति भावः । (२५)

**एतेषां पुरुषाणां** कर्तेत्यनेन सर्वदेवस्रष्टृचतुर्मुखग्रहणं मा भूदिति व्यष्टिसमष्टिभूतसर्वप्रपञ्चहेतुपरब्रह्मग्रहणव्यक्तये **यस्य वैतत् कर्मे**त्युक्तम् । **वा**शब्दः **एतेषां पुरुषाणां** कर्तेति वाक्यकृतोपपादनानादरप्रदर्शनार्थः । बालाक्यधिकरणपूर्वपक्षिपक्षे वाशब्दो न युक्तः; किंतु चशब्दः । पुरुषाणां कर्तेत्युक्तार्थोपपादकपुण्यापुण्यरूपकर्मसत्त्वपरत्वाद् वाक्यस्य । अत एव तत्र, 'पुण्यापुण्यलक्षणं च कर्म यस्ये' ति श्रीभाष्यम् । **यस्य कर्मे**त्यस्य यत्समवेतकृतिविषयभूतमित्यर्थः । क्रियमाणं सृज्यमानमेतत् सर्वं यस्येत्यन्वये तु जगत् यच्छेषभूतमित्येवं पष्ठ्य[illegible] । पूर्वोक्तोऽर्थः स्वरसः । (२६)

तत उ ह बालाकिः समित्पाणिः प्रतिचक्राम, उपायानीति ॥ २७ ॥

तं होवाचाजातशत्रुः, 'प्रतिलोमरूपमेव स्यात् यत् क्षत्रियो ब्राह्मणमुपनयेत् (नयीत)। एहि व्येव त्वा ज्ञापयिष्यामीति ॥ २८ ॥

तं ह पाणावभिपद्य प्रवव्राज ॥ २९ ॥

तौ ह सुप्तं पुरुषमीयतुः ॥ ३० ॥

---

**तत उ ह — उपायानीति**। उशब्दोऽवधारणे। हशब्दः प्रसि एवमजातशत्रुणोक्तो बालाकिः गताभिमानो, 'नीचादप्युत्तमां विद्याम्,' 'आपत्सु ब्राह्मणस्याब्राह्मणात् विद्योपयोगः' इति शास्त्रमनुसृत्य क्षत्रियादप्यजातशत्रो मुपादित्सुः, 'नानुपसन्नाय ब्रह्मोपदेष्टव्यम्' इति शास्त्रं जानन् समिद्भारहस्तः स्सन्, उपगच्छामीति प्रववृते ॥ २७ ॥

**प्रतिलोम — ज्ञापयिष्यामीति**। 'क्षत्रियो ब्राह्मणमुपनयेत्' इति तत् विपरीतरूपमेव स्यात्। अतः एहि त्वामुपनयनमन्तरेणैव ब्रह्म विज्ञापयिष्यामि ह्येव ॥ २८ ॥

**तं ह — प्रवव्राज**। तं बालाकिं पाणौ गृहीत्वा निर्गत इत्यर्थः ॥

**तौ ह सुप्तं पुरुषमीयतुः**। तौ बालाक्यजातशत्रू राजभवने सुप्तं पुरुषं प्राप्तवन्तावित्यर्थः। बालाक्यधिकरणभाष्ये, 'तौ ह सुप्तं पुरुषमाज इत्युदाहृतं वाक्यं बृहदारण्यकगतम्; नैतच्छाखागतम्। अत एव तत्र व्य "तौ ह सुप्तं पुरुषमीयतुः इति श्रुतिः" इत्युक्तम् ॥ ३० ॥

---

**प्रतिलोमरूपमिति**। पण्डितरूपवेदनीयमित्यादाविव अतिशये रूपप्प्रत्ययः प्रतिलोममित्यर्थः। (२८)

**प्रवव्राजेति** संन्यासे प्रसिद्धमपीह तावदविवक्षया प्रयुक्तम्। (२९)

ननु बालाक्यधिकरणस्य कौषीतकिश्रुतिविषयकतायाः प्रागेवोक्तत्वात् तत्र च भाष्यकृता **आजग्मतुरि**त्येव पठितत्वात् कथम् **ईयतुरि**ति पठित्वा व्याख्यायत **बालाक्यधिकरणभाष्ये** इति। (३०)

तं हाजातशत्रुरामन्त्रयाञ्चक्रे, 'बृहन् (त्) पाण्डरवासः सोम-
जेति ॥ ३१ ॥

स उ ह तूष्णीमेव शिश्ये ॥ ३२ ॥

तत उ हैनं यष्ट्या चिक्षेप ॥ ३३ ॥

स तत एव समुत्तस्थौ ॥ ३४ ॥

---

**बृहन् पाण्डरवासः सोमराजन्।** 'प्राणो वाव ज्येष्ठः श्रेष्ठश्चे' ति
श्रेष्ठ्यगुणेन प्राणस्य बृहत्त्वात् बृहन्नित्यामन्त्रणम्। पाण्डरवासस्त्वं च प्राण-
। 'किं मे वासः' इति प्राणेन पृष्टे, 'आपो वासः' इति अपां प्राणवास-
तः। तासाञ्चापाम्, 'यच्छुक्लम्, तदपाम्' इति शुक्लवर्णाश्रयत्वात् पाण्डरत्वं
[।] समानब्राह्मणे, 'अथैतस्य प्राणस्याऽऽपः शरीरं ज्योतीरूपमसौ चन्द्रः'
प्राणस्य चन्द्रसंबन्धप्रतीतेः लक्षणया **सोमे**ति प्राणस्य संबोधनम्। 'प्राणो वै
[:]' इति श्रवणात् **राज**न्नित्यामन्त्र्यत इति व्यासार्यैरुक्तम् ॥ ३१ ॥

**स उ ह तूष्णीमेव शिश्ये।** अनुत्थित एव यथापूर्वमशयिष्टेत्यर्थः ॥ ३२ ॥

**तत उ हैनं यष्ट्या चिक्षेप।** सुप्तं यष्ट्या ताडितवानित्यर्थः ॥ ३३ ॥

**स तत एव समुत्तस्थौ।** दण्डताडनादेव समुत्तस्थौ। न तु प्राणनामा-
णादिनेत्यर्थः। प्राणनामभिरामन्त्रणेऽप्यनुत्थानप्रदर्शनं प्राणान्यत्वज्ञापनार्थम्।
तदशायामुपरतव्यापारेभ्यः शरीरेन्द्रियेभ्योऽन्यत्वं सुज्ञानमपि; तस्यामपि दशा-
नुपरतव्यापारात् प्राणादन्यत्वं ज्ञापनीयमिति। प्राणनामभिरामन्त्रणेऽप्यनुत्थानेन
ताडनोत्थानेन च जीवस्य प्राणव्यतिरेको दर्शितः ॥ ३४ ॥

---

बृहन् पाण्डरवासः सोमराजन् इति। अत्र कर्तव्यो विचारः सर्वैः बृहदारण्यक-
यपरिष्कारयोर्द्रष्टव्यः। (३१)

यष्ट्या चिक्षेपेति। 'पाणिनापेषं बोधयाञ्चकार' इति बृहदारण्यकम्। (३३)

भवेदिति कृत्वा तस्य प्राणविषये संभवेऽपि जीवविषये असंभवं विमृशता शङ्कायां क्रियमाणायाम् उपासनातिरिक्तप्रकारेण शेषतया वर्णनमुपपादयितुं तृतीयसूत्रमिति ।

ननु तर्हि द्वितीयसूत्रे, 'तद् व्याख्यातम्' इति किमर्थम्? तद् विहाय द्वितीयतृतीयसूत्रयोरेकसूत्रतया पठनमेव पर्याप्तम् । न च प्रकृतस्थले प्रकारान्तरेण निर्वाहेऽपि उदाहरणान्तरे विशिष्टोपासनमपि भवतीति ज्ञापनार्थं सूत्रभेद इति वाच्यम् — इन्द्रप्राणाधिकरणे विशिष्टोपासनपक्षस्योक्तत्वात् इह प्रकारान्तरेण निर्वाहे दर्शिते, यत्र यत्संभवः, तत्र तद्ग्रहणमित्यस्य ज्ञायमानतया पृथक्सूत्रवैयर्थ्यात् । अत एव प्राणविषये विशिष्टोपासनसंभवसूचनार्थं पृथक्सूत्रप्रणयनमित्यपि न मन्तव्यम् — इन्द्रप्राणाधिकरणमिदञ्च पश्यतां यथासंभवं तत्तद्ग्रहणस्य स्वतःसिद्धेरिति चेत् — उच्यते । इन्द्रप्राणाधिकरणे, 'उपासात्रैविध्यात्' इत्युपासनपरतया निर्वाहस्य तत्र संभवाभिप्रायेण कथनेऽपि तदधिकरणस्य विशिष्टोपासनेनैव निर्वाहवर्णने न तात्पर्यम्; किन्तु यत्र यथा संभवति तत्र तथा शेषतया निर्वाहवर्णन एवेति ज्ञापनार्थमेव, 'तद् व्याख्यातम्' इति पठित्वा पृथक्कृतम् । अत्र संभवन्निर्वाहप्रकारोपपादनार्थञ्च तृतीयसूत्रम् । 'अन्यार्थं तु' इत्यस्यायमाशयः—प्रकरणस्य जीवपरत्वं शङ्कमानेन यथा तत्र प्राणनामभिरामन्त्रणादेः प्राणलिङ्गस्य प्राणातिरिक्ततया जीवज्ञापनपरत्वमाशय्यते, तथा ब्रह्मपरत्ववादिना जीवलिङ्गस्य जीवातिरिक्तब्रह्मज्ञापनपरत्वं हि सुवचमिति ।

एवञ्च, 'अथास्मिन् प्राण एवैकधा भवती' ति वाक्यम् अस्मिन् इति प्रकरणिनं परमात्मानं ब्रुवत् परमात्मनिष्ठे मुख्यप्राणे एकधाभावपरं वा, प्राणभृति एकधाभावपरं वा, प्राणशरीरके परमात्मनि एकीभावपरं वा, 'प्राणस्य प्राण' मित्युक्तरीत्या पुष्कलप्राणनव्यापाराश्रये परमात्मनि एकीभावपरं वेति विमर्शे, अत्र स्वप्नोद्गमनयोरिव सुषुप्तावेकधाभावस्यास्य जीवकर्तृकताया एव स्वरसतः, 'यदा सुप्तः स्वप्नं न कथञ्चन पश्यती'ति वाक्यतश्च सिद्धत्वात् करणग्रामस्यैकधाभावो नात्र वर्ण्यत इति जीवकर्तृक एकीभावोऽयं परमात्मन्येवेति निश्चये जाते, प्राणशरीरकपरमात्मपरत्वमप्यौचित्यादुपेक्षितुं युक्तम् । समानप्रकरणे बृहदारण्यके, 'य एषोन्तर्हृदय आकाशस्तस्मिन् शेते' इत्यत्र आकाशशब्दो न हि भूताकाशविशिष्टपरमात्मवाची, भूताकाशे जीवशयनाभावात् । किन्तु आ=समन्तात् काशत इत्युक्तपरमात्मवाची । तद्वदिहापि प्राणशब्दो न मुख्यप्राणविशिष्टवाची; मुख्यप्राणे जीवस्यैकीभावाभावात् । किन्तु प्राणनव्यापारविशिष्टपरमात्मवाचीति पर्यालोचनसंभवात् । अस्मिन् प्राण एवेत्यस्य अस्मिन्नेव प्राणे, न तु मुख्यप्राणे अन्यत्र वेत्यर्थः । प्राणनप्रदे परमात्मनि सुषुप्तत्वादेवायं जागरप्रयासायासपरिहारं लभत इति भावः ।

अस्तु तावदिदं कथमपि । सूत्रभाष्ययोराशयस्तावत् प्रागुक्तो ह्यर्थः । एवं 'तद् व्याख्यात' मिति इन्द्रप्राणाधिकरणातिदेशकरणात् इदमधिकरणं तदुपरि अधिकाशङ्कया प्रवृत्तमित्यपि सूच्यते । अधिकाशङ्कापरिहारप्रकारौ च श्रुतप्रकाशिकायां दर्शितौ, "प्रतर्दनविद्यायामुपक्रमे जीवलिङ्गावगमः । महावाक्यस्वारस्यं तु परमात्मपरत्वे । इह तूपक्रमोपसंहारमध्येषु जीवलिङ्गावगमात् अत एव परमात्मनः चिदचिद्विशिष्टतापरत्वाभावेनोपासात्रैविध्याप्रतिपत्तेः

**तं होवाचाजातशत्रुः, 'क्वैष एतद्बालाके पुरुषोऽशयिष्ट? क्वै(क्व ए) तदभूत्? कुत एतदागात्' इति ॥ ३५ ॥**

**तदु ह बालाकिर्न विजज्ञौ ॥ ३६ ॥**

**तं होवाचाजातशत्रुः, यत्रैष एतद्बालाके पुरुषोऽशयिष्ट, यत्रैतदभूत् कुत(यत?) एतदागात् ॥ ३७ ॥**

---

एवं देहेन्द्रियमनःप्राणव्यतिरिक्तं जीवं प्रदर्श्य ततोऽतिरिक्तं परमात्मानं बोधयितुमाह **तं होवाच**—। हे बालाके ! **एष पुरुषः** अशयिष्ट इत्येतत् क्व इति स्वप्नस्थानप्रश्नः। यद्वा, **एत**च्छब्दः स्वप्नपरः। अशयिष्टेत्येतत् प्रत्ययार्थमात्रपरम्। क्व **एतत्** स्वप्नमकृतेत्यर्थः। सर्वथा स्वप्नस्थानप्रश्नः। **क्व वा एतदभूत्** दिति सुषुप्तिस्थानप्रश्नः। एतच्छब्दस्य नपुंसकलिङ्गत्वेऽपि प्रकृतवाचिप्रकृतिस्वारस्यात् प्रकृतपुरुषशब्दितजीवपरः (स्त्वम्?)। ततश्च क्व सुप्तोऽभूदित्यर्थः **कुत एतदागादिति**। अत्राप्येतच्छब्दो जीवपर एव। प्रबोधकालीनजीवोद्गमनापादानं किमित्यर्थः। ततश्च जीवस्य स्वप्नस्थानसुषुप्तिस्थानोद्गमनापादानानि पृष्टानि भवन्ति। यद्वा—त्रिष्वपि प्रश्नेषु **एत**च्छब्दः सप्तम्यन्तः। एतस्मिन् क्व इत्यर्थः। 'सुपां सुलुक्' इति सुपो लुक्। एतस्मिन् काले क्व स्वाप्नमनुभूतम् एतस्मिन् काले क्व सुप्तः; एतस्मिन् काले कुतो निर्गत इति। एवञ्च त्रयाणाम् एतच्छब्दानामैकरूप्यञ्च सिध्यति ॥ ३५ ॥

**तदु ह बालाकिर्न विजज्ञौ**। उत्तरं बालाकिर्न ज्ञातवानित्यर्थः ॥ ३६ ॥

**तं होवाचाजातशत्रुः यत्रेत्यादि**। उच्यत इति शेषः ॥ ३७ ॥

---

**स्वप्नमनुभूत**मिति पाठे, 'संध्यं स्वप्नं तृतीयं स्थानम्' इति श्रुतिदर्शनात् क्लीबस्यापि साधुत्वं द्रष्टव्यम्। (३५)

**हिता नाम हृदयस्य नाड्यो हृदयात् पुरीततमभिप्रतिष्ठन्ति[1] । [त]ा सहस्रधा केशस्यापि पातः[2] तावदण्व्यः पिङ्गळस्याणिम्ना शुक्लस्य कृष्णस्य पीतस्य लोहितस्येति । तासु तदा ३८॥**

प्रतन्वन्ति । 2. केशो विपाटितः.

---

[स्व]प्नस्थानप्रश्नं प्रतिवक्ति **हिता नाम — तदा भवति** । आत्मनो हिता-[हि]ता इति प्रसिद्धाः हृदयसंबन्धिन्यो नाड्यः **हृदयात् पुरीततं** पुरीतदाख्यं [मू]र्तिमांसपिण्डविशेषमभिप्रस्थिता भवन्ति । हृदये पुरीतति नद्धा भवन्ति । [य]॥ केशस्यापि सहस्रधा पातः अतिसूक्ष्मः, **तावदण्व्यः** तथा **अण्व्यः** [पि]ङ्गळस्य शुक्लस्य कृष्णस्य पीतस्य लोहितस्य अन्नपीतादिरसस्य **अणिम्ना** [पू]र्णाः तिष्ठन्ति । अतिसूक्ष्मत्वात् लेशेनापि पूर्णाः भवन्ति । **तासु [त]दा** स्वप्नकाले आश्रितो भवतीत्यर्थः ॥ ३८ ॥

---

[ता]सु **तदा भवती**ति । ननु जीवातिरिक्तपरमात्मप्रतिबोधनार्थं प्रवृत्तेन अजातशत्रुणा [स्व]प्नादि पृष्ट्वा व्याख्यानं क्रियताम् । स्वप्नस्थानं किमिति प्रथमप्रश्नः तद्विवरणञ्च [पर]मात्मनः सुप्तानाधारत्वात्, नाडीनामेव तथात्वात् परमात्मनिरूपणे तदनुपयोगादिति [उच्य]ते । 'य एतेषां पुरुषाणां कर्ता यस्य वैतत् कर्म' इत्यनेनैव जीवविलक्षणे ब्रह्मणि [सि]द्धे सुषुप्तप्रतिबोधनाद्यर्था प्रवृत्तिरेव किमर्थेति विचारणीयम् । तदुच्यते । बालाकिः [सर्वा]न् पुरुषान् कीर्तयन् शारीरं पुरुषं जाग्रतं सुप्तञ्च पृथक्पृथक् निर्दिदेश । सुषुप्तं तु [तद]ायं मन्यते—जाग्रतः पुंसः सुप्तोऽन्यः, व्याघ्रवराहाद्यनेकाभिमानशालित्वात् सुप्तस्य । [स्व]प्ने, व्याघ्रोऽहम्, वराहोऽहम्, महाराजोऽहम्, महाब्राह्मणोऽहमित्येवम् । सुषुप्ति-[दश]ायां लीनत्वात् श्वासप्रश्वासरूपेण तदाऽवस्थितः प्राण एव सुषुप्तः स्यादिति तस्य [जीव]स्य सुषुप्तो न गणनीय इति । अतोऽयं बालाकिः प्रतिबोधनीयः, 'एक एवाऽऽत्मा [स्वप्न]सुषुप्तीरनुभवति स्थानभेदेन । न च सुषुप्तः प्राणः । तथासति प्राणनामभिरामन्त्रणे न चैवम्' इति । तत्र, 'यत्रैतत् सुप्तोऽभूत्, य एष विज्ञानमय' इति जाग्र-[दव]स्थितम् । जागरस्थानापेक्षयाऽतिरिक्तं नाडीस्थानं प्राप्य स एव स्वप्नमनुभवति; [प्रा]प्य सुषुप्तिमित्युपदिष्टं भवति । (३८)

**यदा सुप्तः स्वप्नं न कथञ्चन [1]पश्यति, अथास्मिन् प्राण ए भवति। तदैनं वाक् सर्वैर्नामभिः सहाप्येति; चक्षुः सर्वै रूपैः सहा श्रोत्रं सर्वैः शब्दैः सहाप्येति; मनः सर्वै[2]र्ध्यानैः सहाप्येतीति ॥ ३९**

**स यदा प्रतिबुध्यते, यथा [3]अग्नेर्विस्फुलिङ्गाः विप्रति एवमेवैतस्मादात्मनः प्राणाः यथायतनं विप्रतिष्ठन्ते। प्राणेभ्यो दे देवेभ्यो लोकाः ॥ ४० ॥**

1. कच्चन. 2. ध्यातैः. 3. अग्नेर्ज्वलतो विस्फुलिङ्गाः.

---

सुषुप्तिस्थानप्रश्नस्योत्तरमाह **यदा सुप्तः—सहाप्येतीति**। **सुप्तः**—ह क्तः—स्वपन् सन् यदा उपरतस्वप्नदर्शनो भवति—यदाशब्दानुरोधात् तदाशब्दो र्तव्यः—**अथ** स्वप्नानन्तरं **अस्मिन् प्राणे** प्राणशरीरके परमात्मनि **एकधा भ** एकधाभावो नाम – जाग्रदाद्यवस्थाजनितदेहात्माभिमानकृतरागद्वेषादिलक्षणका दिराहित्येनावस्थानम्। 'सर्वाणि हवा इमानि भूतानि प्राणमेवाभिसंविशन्ति' इ प्राणशब्दस्य परमात्मनि प्रचुरप्रयोगात्, वाजसनेयके समानप्रकरणे, 'य एषोऽन आकाशस्तस्मिन् शेते' इति आकाशशब्दितस्य सुषुप्त्याधारत्वश्रवणाच्च अ प्राणशब्दयोः परमात्मपरत्वमन्तरेणाविरोधासंभवात्, 'सता सोम्य तदा संपन्नो भ 'सति संपद्य न विदुः', 'प्राज्ञेनात्मना संपरिष्वक्तः' इति परमात्मनः सुषुप्त्याध श्रुत्यन्तर(रे?)श्रवणाच्च प्राणशब्दो योगेन वा अपर्यवसानवृत्त्या वा ब्रह्मपरः। परम बुद्धिस्थत्वात् **अस्मिन्** इति निर्देशोऽप्युपपद्यते। **अथ (तदा?)** तदुत्तरक्षण परमात्मानम् अपियन्तं जीवं वागादीन्द्रियाण्यपि [तत्] स्वकार्येण सहापियन्तीत **नाम**शब्दो नामाभिलपनपरः। **रूप-शब्द**शब्दौ तज्ज्ञानौपयिकव्यापारपरौ। शब्दादीनां सुषुप्तौ लयासंभवात्। इन्द्रियव्यापारोपरतेरेव सुषुप्तिशब्दार्थत्वात् ॥

उद्गमनापादानप्रश्नस्योत्तरमाह **स यदा — लोकाः**। जीवप्रबोधक अग्नेर्विस्फुलिङ्गा इव एतस्मात् परमात्मनः प्राणशब्दिता जीवाः यथास्थानं प्र भवन्ति। तेभ्यश्च देवशब्दितानि इन्द्रियाणि, एतेभ्यश्च लोकशब्दितानि इ भवन्तीत्यर्थः ॥ ४० ॥

---

**यथाग्नेरि**ति। अत्र, 'यथाग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गाः' इति श्रीभाष्यपाठः।

तद्यथा क्षुरः क्षुरधाने [1]अवहितः स्यात्, विश्वम्भरो वा विश्वम्भरकुलाये, एवमेवैष प्राज्ञ आत्मा इदं [2]शरीरमात्मानमनुप्रविष्टः आ लोमभ्यः आ नखेभ्यः ॥ ४१ ॥

तमेतमात्मानमेते आत्मानोऽन्ववस्यन्ति ॥ ४२ ॥

यथा श्रेष्ठिनं स्वाः ॥ ४३ ॥

1. धाने हितिः. 2. शरीरमनुप्रविष्टः.

---

तद् यथा क्षुरः — आ नखेभ्यः । क्षुरो धीयतेऽस्मिन्निति क्षुरधानं क्षुरकोशः । तस्मिन् यथा क्षुरः अवहितः पिहितप्रविष्टः, — विश्वं बिभर्ति वैश्वानराग्न्यादिरूपेणेति विश्वंभरोऽग्निः — तस्य कुलाये नीडे —, एवमेवैष परमात्मा इदं पुरोवर्तिशरीरम् आलोमभ्यः आ नखेभ्यः, व्याप्त इत्यध्याहारः । व्याप्त्या आत्मानं जीवात्मानमनुप्रविष्टः अन्तर्यामितयाऽनुप्रविष्ट इत्यर्थः। तादृशस्य सुषुप्त्याश्रयत्वोद्गमनापादानत्वे संभवत इति भावः । यद्वा इदं वाक्यं जीवशरीरपरमेव व्याख्येयम्। आत्मानमिदं शरीरम् आत्मत्वेनाभिमन्यमानमिदं शरीरम् आलोमभ्यः आनखेभ्यः जीवरूपेण प्रविष्ट इत्यर्थः ॥ ४१ ॥

तमेतमात्मानमितर आत्मनोऽन्ववस्यन्ति । एतादृशं परमात्मानम् इतरे जीवाः अन्ववस्यन्ति अनुवर्तन्ते ॥ ४२ ॥

तत्र दृष्टान्तमाह यथा श्रेष्ठिनं स्वाः । यथा श्रैष्ठ्यवन्तं स्वाः ज्ञातयः अनुवर्तन्ते ॥ ४३ ॥

---

अवहितः अधस्तात् निहितः, अन्तर्हित इति वा । शरीरमात्मानमित्युक्तयोर्भेदात् तयोः अनुप्रविष्ट इत्यत्रान्वयायोगात् शरीरं व्याप्त आत्मानमनुप्रविष्ट इत्यध्याहारेण प्रथमयोजना । (४१)

श्रैष्ठ्यवन्तमिति । श्रेष्ठिपदं वैश्ये रूढं तदर्थविवक्षयाऽप्यन्वयमर्हति । अथापि तथा विशेषग्रहणे कारणाभावात् श्रैष्ठ्यवन्तमित्यर्थवर्णनम् । (४३)

तद् यथा श्रेष्ठी स्वैर्भुङ्क्ते, यथा श्रेष्ठिनं स्वाः भुञ्जते—एवमे प्राज्ञ आत्मा एतैरात्माभिर्भुङ्क्ते। यथा श्रेष्ठी स्वैः, एवं वा एतमात्मा ऽन्ववस्यन्ति ॥ ४४ ॥

स यावद्ध वा इन्द्र एतमात्मानं न विजज्ञौ, तावदेनमसु अभिबभूवुः। स यदा विजज्ञौ, अथ हत्वाऽसुरान् विजित्य सर्वे देवानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं परीयाय।

सर्वान् पाप्मनोऽपहत्य सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिप

---

**तद् यथा श्रेष्ठी**—। यथा कश्चित् प्रभुः भोगापकरणभूतैः स्वैर्ज्ञाति भोगान् भुङ्क्ते, यथा स्वाश्च बन्धवः तं प्रभुमैश्वर्यादिसमग्रमनुभूय तद्दत्तानि वित्ताद चोपजीव्य हृष्यन्ति—एवमेवायं परमात्मा स्वोपकरणभूतैर्जीवात्मभिर्लीलारसं भुङ् ते चात्मानः परमात्मदत्तभोगोपकरणाः सर्वैश्वर्यादिगुणविशिष्टं तमनुभूय भवन्तीत्यर्थः। **यथा वा स्वाः श्रेष्ठिनं भुञ्जन्तीति** पाठे, यथा प्रधानपु स्वकीयैर्भृत्यादिभिः भोगसाधनानि उपहरद्भिः हेतुभिः भोगान् भुङ्क्ते, यथ भोगसाधनानि उपहरन्तः प्रधानपुरुषं पालयन्ति—एवमित्यर्थः। 'भुज पालने' भुजेः परस्मैपदित्वादिति ध्येयम्। ईदृशं भोक्तृत्वं जीवद्वारा वा परमात योजनीयम् ॥ ४४ ॥

**स यावत्—य एवं वेद**। इन्द्रो ब्रह्मविद्यालाभात् प्रागसुरैः पी इमां ब्रह्मविद्यां लब्ध्वा असुरहननेन विजयी सर्वदेवाधिपत्यं सर्वदेवश्रैष्ठ्यं स्वारा शब्दिताकर्मवश्यत्वलक्षणं मोक्षं च प्राप। अतोऽन्योऽप्येवंवित् सर्वभूताधि सर्वभूतश्रैष्ठ्यं पापापहतिपूर्वकमकर्मवश्यत्वलक्षणं स्वाराज्यशब्दितं मोक्षञ्च प्र तीत्यर्थः।

---

**तद्यथा श्रेष्ठीति**। अत्र, तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते यथा वा स्वाः श्रेष्ठिनं भुञ्जन्ति, मेवैष प्रज्ञात्मा एतैरात्मभिर्भुङ्क्ते, एवमेवैत आत्मान एनं भुञ्जन्ति' इति श्रीभाष्यपाठः।

ते, य एवं वेद। य एवं वेद ॥ ४५ ॥

ओं वाङ्मे मनसीति शान्तिः।

इति ऋग्वेदे कौषीतक्युपनिषदि चतुर्थोऽध्यायः ॥

इति कौषीतकिब्राह्मणोपनिषत् ॥

ओं नमो वासुदेवाय।

शुभमस्तु

---

व्यासार्यैस्तु—"सर्वान् पाप्मनोऽपहत्येत्यनेनापहतपाप्मत्वादिगुणाष्टक-
कम्; जरादीनामपि पाप्मान्तर्गतत्वात्। उक्तं हि वाक्यकारैः, 'स्युः पाप्मानः
जरामृत्युशोकादयः संख्यातत्वात्' इति। स्वाराज्यम् स्वाधीनत्वम्। अतः
प्रकामत्वं सत्यसंकल्पत्वञ्चोक्तं भवति। अतः (तत्?) स्वाराज्यं संसारिभ्योऽस्य
ष्ठ्यरूपम् आधिपत्यम्। अधिपतिः परमात्मा; 'सर्वस्याधिपतिः' इति श्रुतेः।
संबन्धि आधिपत्यम्। गुणाष्टकं हि ब्राह्मसंबन्धितया ब्राह्ममुच्यते, "ब्राह्मेण
मिनिः" इति। अतो ब्रह्मसंबन्धितया तत्साधर्म्यरूपं संसारिभ्यः श्रेष्ठतारूपं यत्
राज्यम्, तदेतीति श्रुतेरर्थः" इत्युक्तम्। [य एवं वेद?।] अन्योऽपि य
ामुपनिषदं वेद, सोऽपि ईदृशं फलमाप्नोतीत्यर्थः ॥ ४५ ॥

एतत् प्रकरणं समन्वयाध्याये चतुर्थपादे चिन्तितम्। तत्र हि—'यो वै
लाक एतेषां पुरुषाणां कर्ता यस्य वैतत् कर्म स वै वेदितव्यः' इत्यत्र [यः?]
ादित्यादिपुरुषाणां कर्ता, तत्कर्तृत्वनिर्वाहकञ्च पुण्यपापादिलक्षणं कर्म यस्यास्ति, स
दितव्य इत्यर्थप्रतीतेः, कर्मशब्दस्य पुण्यपापयोः रूढत्वात्, सुप्तपुरुषागमनयष्टिघातो-
ापनादीनाञ्च जीवलिङ्गत्वात्, 'तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते' इति वाक्यप्रतिपाद्य-
ोक्तत्वपरिपाल्यत्वयोर्जीव एव संभवात् जीव एव प्रकरणप्रतिपाद्य इति प्राप्ते —
च्यते, "जगद्वाचित्वात्"। 'यस्य वैतत्कर्म' त्यत्र कर्मशब्दस्य यद्यपि पुण्य-
ापादौ रूढिरस्ति। तथापि चलनेऽपि रूढ्यविशेषेण रूढ्योः परस्परकलहायमान-

---

अन्योऽपि य एतामिति। इदं य एवं वेदेत्यभ्यासस्यार्थवर्णनमिव। अभ्यासस्य
ामाप्त्यर्थत्वं सर्वत्र प्रसिद्धमिहापि संभवति।

त्वेनार्थनिर्णयासामर्थ्यात् । एतच्छब्दस्य प्रत्यक्षादिसंनिधापितजगत्परत्वौचित्
तत्समानाधिकृतकर्मशब्दस्यापि, क्रियत इति कर्मेति व्युत्पत्त्या जगद्वचनत्वमे
चितम् । ततश्चायमर्थः — त्वदुक्तानामादित्यादिपुरुषाणां यः कर्ता, अन्ततो ग
सर्वमपि जगत् यस्य कार्यम्, स एव वेदितव्यः । ततश्च नात्र जोवस्य प्रसक्ति
यदि हि पुण्यापुण्यलक्षणकर्मसंबन्धो जीवोऽत्र वाक्ये प्रतिपाद्यः स्यात् — ः
आदित्यादिषु पुरुषवादिनं बालाकिमब्रह्मवादित्वेन प्रत्याख्यातवता अजातशत्
स्वयमब्रह्मण उपदेश्यत्वासंभवात् [असामञ्जस्यं स्यात् ?] । अतो नायं कर्मशब्
पुण्यपापवचनः; अपितु जगद्वचनः । "जीवमुख्यप्राणलिङ्गान्नेति चेत्
व्याख्यातम्" । यष्टिघातोत्थापनभोक्तृत्वादिजीवलिङ्गात्, 'अथास्मिन् ः
एवैकधा भवती'ति प्राणशब्देन प्राणभृतं निर्दिश्य तत्र करणग्रामस्यैकधाभ
श्रवणात्, प्राणभृत्त्वस्य जीवलिङ्गत्वाच्च जीव एवात्र प्रतिपाद्यते । न च प्राणशब्द
मुख्यप्राण एवार्थः; प्राणनामभिरामन्त्रणाश्रवणेन मुख्यप्राणव्यतिरिक्तत्वस्य ज्ञापित
मुख्यप्राणस्य एतत्प्रकरणप्रतिपाद्यत्वासंभवेन प्राणशब्दस्य प्राणसहचरितजीवलक्ष
त्वस्यैव युक्तत्वात् । ततश्च यष्ट्यादिजीवलिङ्गात् प्राणशब्दसंकीर्तनाच्च प्राण
जीव एवात्र प्रतिपाद्यत इति चेत्—तद्व्याख्यातम् । प्रतर्दनविद्यायाम्, 'ः
प्रकरणे ब्रह्मलिङ्गानि चिदचिल्लिङ्गानि चोपलभ्यन्ते, तत्र चिदचिल्लिङ्गानां चिद
च्छरीरकान्वयसंभवात् चेतनाचेतनशरीरकब्रह्मोपासनं विधीयते' इत्युक्तत्वात्

---

**जगद्वचनत्वमेवोचित**मिति । नात्र कर्मपदं जगदित्यर्थकम्; अप्रसिद्धेः । अ
जगति **एतत्**पदेनोक्ते तद्गतकार्यत्ववाचि । तथाच **भाष्यम्** "कृत्स्नस्य जगतः कार्यत्ववाची"
एतच्छब्द एव सर्वजगत्परः । तद्गतकार्यत्वं कर्मेत्यनेनोच्यते, सर्वं यस्य कार्यमिति ।
कारेण पुण्यापुण्यपरत्वेऽनौचित्यातिशयो ज्ञाप्यते । तत्पक्षे हि पुरुषाणां कर्तेत्युक्तं कर्तृत्वं
अस्वरसम् — पुरुषसृष्टिसंकल्पाश्रयत्वाभावात्; पुरुषोत्पत्तिपर्यवसायिपुण्यादिकर्मकर्तृत्वस्यैव
सत्त्वात् । तावदर्थविवक्षायां **यस्य वैतत्कर्मे**ति पुनरुक्तं स्यात् । यस्य कर्मेत्येवालमिति **एत**
वैयर्थ्यञ्च । वाशब्दश्चानन्वितः; चशब्दस्यैव युक्तत्वात् । एवमत्र भाष्ये, 'यद्यपि रूढिर्
तथापि' इति प्रयोगस्वारस्यात् पुण्यापुण्ययोः रूढावप्यनतिसंमतिराविष्क्रियते; चलने रू
रावश्यकत्वेन प्रकरणाद्यनुरोधेन कर्मत्वेन रूपेणैव तद्विशेषग्रहणसंभवादिति ।

**प्राणशब्देने**ति । अत्र प्रकरणे प्राणनामभिरामन्त्रणरूपं प्राणलिङ्गं प्रथममस्ति । पश्चा
'प्राण एवैकधा भवती' ति प्राणशब्दश्च । तत्र प्रथमस्य आत्मनि प्राणव्यतिरिक्तताज्ञापनार्थ

इहानन्यथासिद्धजीवलिङ्गमस्ति चेत्—तच्छरीरकब्रह्मोपासनार्थः तन्मध्यवर्तिजीवोपदेशः। अत्र च प्रकरणे उपक्रम एव, 'मृषा वै मा संवादयिष्ठाः' इति अब्रह्मवादप्रत्याख्यानदर्शनात् पापापहतिपूर्वकस्वाराज्यरूपब्रह्मविद्यैकान्तफलेनोपसंहारात् प्रकरणस्य ब्रह्मपरत्वेन निश्चितत्वात् मध्ये जीवोपदेशस्तच्छरीरकतया ब्रह्मोपासनार्थ इत्यध्यवसीयत इत्यर्थः। "अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके"। यष्टिघातेन जीवसंबोधनं जीवातिरिक्तब्रह्मस्वरूपप्रतिबोधनार्थमिति जैमिनिराचार्यो मन्यते। कुतः? प्रश्नव्याख्यानाभ्याम्=प्रश्नप्रतिवचनाभ्याम्। यष्टिघातेनापि जीवप्रतिबोधनानन्तरं, 'क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्वैतदभूत् कुत एतदागात्' इति जीवमुख्याधारप्रश्नस्य, 'अथास्मिन् प्राण एवैकधा भवती' ति

---

पूर्वपक्षिणोऽपीष्ट। तेन प्राणव्यतिरेकसिद्धावपि जीवत्वं न सिद्ध्यति। अतो द्वितीयग्रहणम्। ननु प्राणशब्दस्य जीवलिङ्गत्वेन वर्णनं पूर्वपक्षीष्टं चेत्, 'जीवलिङ्गान्नेति चेत्' इत्येतावदेवालमिति चेत् — सत्यम्। सूत्रकारः, 'जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यात् —' इति प्रागुक्तसूत्रप्रत्यभिज्ञानसंपत्तिसौकर्याय पूर्वपक्ष्याशयं जीवमुख्यप्राणलिङ्गादिति पूर्वशब्दप्रयोगेणानुवदतीति भाव्यम्। न हि प्राणस्य प्रकरणप्रधानप्रतिपाद्यता संभवति, 'तद्यथा श्रेष्ठी' त्याद्युक्तभोक्तृत्वात्मत्वादेरनन्वयात्।

जैमिनिराचार्यो मन्यत इति। नन्वत्र पूर्वसूत्रे जीवशरीरकब्रह्मोपासनार्थं जीवोपदेश इति स्वमतं कथयन् सूत्रकारो यदि जैमिनिमतं पश्चात् निर्दिशति, तर्हि कतरदत्र ग्राह्यम्। द्वितीयपादे वैश्वानरविद्यायामग्निशरीरकपरमात्मोपासनार्थमग्निशब्द इत्युक्त्वा, 'साक्षादप्यविरोधं जैमिनिः' इति योगार्थपक्षमुपचिक्षेप। तत्र सूत्रकारपक्षमेवादृत्य, जैमिनिमतप्रदर्शनं संभवदुदाहरणान्तरविषयतत्परिग्रहाभिप्रायेणेति वर्णयामः। न ह्यत्रापि तद्वत् स्थलान्तरे जीवोपदेशस्य जीवव्यतिरेकप्रदर्शनार्थताव्युत्पादनायेह जैमिनिमतोक्तिरिति शक्यं वक्तुम्; 'अपि चैवमेके' इति प्रकृतस्थल एव जैमिनिमतग्राह्यतायामुपष्टम्भकवर्णनात्। अत्र जैमिनिमतमेव तन्मतमिति चेत्, तर्हि पूर्वसूत्रमिदं सूत्रञ्च, 'तद् व्याख्यात' मिति भागत्यागेन एकसूत्रतया प्रणेतव्यं भवेत् इति चेत् — उच्यते। अत्र पूर्वसूत्रेण जीवमुख्यप्राणोभयविषयेऽपि विशिष्टोपासनपक्ष उक्तः, अनेन सूत्रेण विशिष्टोपासनमुपेक्ष्य जीवादिव्यतिरेकप्रदर्शनार्थस्तदुपदेश इति पक्षान्तरमुच्यते इति केषांचिन्निर्वाहः इह प्रकाशिकायामादृतः। नन्वेवं कतरन्मतं ग्राह्यमिति शङ्का परिहार्येति चेत् – उच्यते। जैमिनिमतमेवेह सूत्रकारस्यापि गूढमभिमतम्। पूर्वसूत्रेण पक्षान्तरकथनञ्च तस्यापि स्थलान्तरे समादरणीयत्वमस्तीति ज्ञापनाय। वैश्वानराधिकरणे जैमिनिपक्षग्रहणं स्थलान्तरे उपयोगाभिप्रायेण; इह स्वपक्षग्रहणं तदभिप्रायेणेति विशेषः। तेन चेदृशसमाधानस्य प्रागेवोक्ततया पूर्वपक्षः प्रायो नोदियादिति ज्ञाप्यते। तदनन्तरञ्च तादृशं

समाधानमिहासंभावितमिति पुनः पूर्वपक्षिशङ्कायां प्रकारान्तरेण समाधानं हृद्गतं जैमिनिकण्ठे प्रदर्श्यते। कथं तदिहासंभावितमिति चेत् — यत्र जीवादौ परमात्मवाचिशब्दसामानाधिकरण्या दिना परमात्मधर्मान्वयप्रतीतिः, तत्र विशिष्टविवक्षा। इह तु, 'क्वैष तदाऽभूत् कुत एतद् गात्', 'एतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते' इति व्यधिकरणनिर्देश एव लक्ष्यते अतो विशिष्टोपासनमसंभावितमिति। एवं सूत्रद्वयेन पक्षद्वयनिर्देशश्च अधिकरणसारावल्याम् दर्शितः —

"इत्थं जीवातिरिक्ते प्रकरणनियते तत्र यज्जीवमुख्य-
प्राणाख्यानं न तेन क्षतिरिह च तथा तद्विशिष्टेप्युपासा।
प्राणस्य प्राणभाजोऽप्यधिकरणतया वाजिवाक्योक्तरीत्या
ब्रह्मज्ञप्त्यै तदन्यप्रकथनमिति हि स्थापना सार्वभौमी॥" इति।

अत्र श्लोके पूर्वार्धेन विशिष्टोपासनमुक्त्वा तद्विवरणमेवोत्तरार्धेन क्रियते। **वाजि वाक्यम्** अन्तर्यामिब्राह्मणम्। तृतीयपादे, 'ब्रह्मोच्यते' इति शेषः। तथाच अन्तर्यामिश्रु रीत्या इह प्राणजीवविशिष्टतया ब्रह्मोच्यत इति तदर्थः। एवं ब्रह्मज्ञप्त्यै तदन्यप्रकथनात् प्रतर्द विद्यायामिवेहापि विशिष्टोपासनसंभवात् एषा स्थापना सार्वभौमीति **चिन्तामणि**व्याख्या सारेणार्थः।

चिन्तामणौ यथावस्थितवाक्यभ्रंशात् तत्रतत्र वाक्यान्तरप्रक्षेपशङ्कया अविश्वसनीयत्वमाशः प्रवृत्तायां **पदयोजनायां** पूर्वार्धे विशिष्टोपासनरूपमेतदधिकरणद्वितीयसूत्रप्रमेयमुच्यते; तृती सूत्रप्रमेयमुत्तरार्धे। वाजिवाक्यं तावत् 'अपि चैवमेके' इति सूत्रखण्डविवक्षितं वाक्यम्; त्वन्तर्यामिब्राह्मणम्। तथाच तत्र प्राणजीवकथनं प्राणजीवाधिकरणतया तदन्यभूतं ब्रह्मेति ज्ञा नार्थम्। अयमत्कृष्टः परिहार इति तदर्थ इत्युक्तम्। तत् सिद्धम् एवमाद्यनुरोधाद 'जीवोपदेशः तच्छरीरकब्रह्मोपासनार्थ इत्यध्यवसीयते' इति वर्ण्यत इति।

अत्रेदं बोध्यम् — श्रीभाष्ये द्वितीयसूत्रस्य जीवविशिष्टब्रह्मोपासनतात्पर्यकत्वं नैव भाषि तम्। प्राणशरीरकब्रह्मोपासनमिह प्रकरणे संभवतीति तेन सूत्रेण कथ्यत इति पुनर्भाष सूक्तिमापाततः पठन्तः सर्वे संमन्येरन्। वस्तुतः सूक्तिशैलीमवदधानैरिदं सुज्ञानम्, य द्वितीयसूत्रभाष्यम् "तत्परतया वर्णनीयानीति" इत्यन्तेन समाप्तम्; ततः, "प्रातर्दने ही त्यादि "इत्यत्राह" त्यन्तं तृतीयसूत्रावतरणभूतमिति। अतश्च प्राणशरीरकतया ब्रह्मोपासनम न भाष्यकृता द्वितीयसूत्रविवक्षिततया कण्ठोक्तम्। किन्तु तृतीयसूत्रोत्थानोपयोगिशङ्काकनुखे संभवमात्रेणाऽऽविष्कृतमित्येतदेव। जीवविशिष्टोपासनं तु नतराम्। तर्हि द्वितीयसूत्रप्रमे किमिति चेत् — न विशिष्टोपासनं वाक्यविवक्षितमिति तत्प्रमेयम्; किन्तु ब्रह्मपरत्व प्रकरणे निश्चितत्वात् जीवादिलिङ्गं श्रूयमाणमपि तच्छेषतया नेयमित्येतदेव। तदेव भाषितम "**तत्परतया वर्णनीयानी**" ति। अत्र च **श्रुतप्रकाशिका**, "न तूपासनार्थत्वमप्यु देष्टव्यमिति भावः" इति। अथ च, शेषतया वर्णनं नाम विशिष्टोपासनपरतया वर्णनाद्वाधि

क्षेमाय यः करुणया क्षितिनिर्जराणां भूमावजृम्भयत भाष्यसुधामुदारः ।
वामागमाध्वगवदावदतूलवातो रामानुजः स मुनिराद्रियतां मदुक्तिम् ॥

इति कौषीतक्युपनिषत्तुरीयाध्यायप्रकाशिका ।

इति

श्रीमत्ताताचार्यचरणारविन्दचञ्चरीकस्य वात्स्यानन्तार्यपादसेवा-
समधिगतशारीरकमीमांसाभाष्यहृदयस्य परकाल-
मुनिपादसेवासमधिगतपारमहंस्यस्य

**श्रीरङ्गरामानुजमुनेः कृतिषु**

**कौषीतकिब्राह्मणोपनिषत्प्रकाशिका**

संपूर्णा ॥

श्रीरस्तु ॥

**श्रीमते रङ्गरामानुजमहादेशिकाय नमः**

---

सचन्द्रलोकभोगोक्ता मुक्तिः पर्यङ्कविद्यया ।
ऐहिकामुष्मिकश्लिष्टा मुक्तिः प्रातर्दनीगता ॥

केवला मुक्तिरन्ते च प्रोक्ता बालाकिविद्यया ।
मुख्यप्राणस्य साक्षस्य मध्ये वैभवमीरितम् ॥

इत्थमीशाद्युपनिषत्परिष्कारविधायिना ।
वेदान्तलक्ष्मणाभिख्ययोगीन्द्राङ्घ्रब्जसेविना ॥

रङ्गलक्ष्मणयोगीन्द्राल्लब्धवेदान्तसंपदा ।
विविधग्रन्थनिर्माणसिद्धसाधुप्रसत्तिना ॥

वीरराघवसंज्ञेन वात्स्यसच्चक्रवर्तिना ।
कौषीतकिश्रुतिशिरःपरिष्कारः क्रमात् कृतः ॥

इति वात्स्यसच्चक्रवर्तिवीरराघवाचार्यकृतः

**कौषीतक्युपनिषद्भाष्यपरिष्कारः**

श्रीमते हयवदनपरब्रह्मणे नमः

श्रीरस्तु ॥ शुभमस्तु ॥

— ० —

समाधानमिहासंभावितमिति पुनः पूर्वपक्षिशङ्कायां प्रकारान्तरेण समाधानं हृद्गतं जैमिनिकण्ठो प्रदर्श्यते । कथं तदिहासंभावितमिति चेत् — यत्र जीवादौ परमात्मवाचिशब्दसामानाधिकरण्य दिना परमात्मधर्मान्वयप्रतीतिः, तत्र विशिष्टविवक्षा । इह तु, 'क्वैष तदाऽभूत् कुत एतद गात्', 'एतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते' इति व्यधिकरणनिर्देश एव लक्ष्यते अतो विशिष्टोपासनमसंभावितमिति । एवं सूत्रद्वयेन पक्षद्वयनिर्देशश्च अधिकरणसारावल्याम दर्शितः —

> "इत्थं जीवातिरिक्ते प्रकरणनियते तत्र यज्जीवमुख्य-
> प्राणाख्यानं न तेन क्षतिरिह च तथा तद्विशिष्टेप्युपासा ।
> प्राणस्य प्राणभाजोऽप्यधिकरणतया वाजिवाक्योक्तरीत्या
> ब्रह्मज्ञप्त्यै तदन्यप्रकथनमिति हि स्थापना सार्वभौमी ॥" इति ।

अत्र श्लोके पूर्वार्धेन विशिष्टोपासनमुक्त्वा तद्विवरणमेवोत्तरार्धेन क्रियते । **वाजि वाक्यम्** अन्तर्यामिब्राह्मणम् । तृतीयपादे, 'ब्रह्मोच्यते' इति शेषः । तथाच अन्तर्यामिश्रुति रीत्या इह प्राणजीवविशिष्टतया ब्रह्मोच्यत इति तदर्थः । एवं ब्रह्मज्ञप्त्यै तदन्यप्रकथनात् प्रतर्द विद्यायामिवेहापि विशिष्टोपासनसंभवात् एषा स्थापना सार्वभौमीति **चिन्तामणि**व्याख्या सारेणार्थः ।

चिन्तामणौ यथावस्थितवाक्यभ्रंशात् तत्रतत्र वाक्यान्तरप्रक्षेपशङ्कया अविश्वसनीयत्वमाश प्रवृत्तायां **पदयोजनायां** पूर्वार्धे विशिष्टोपासनरूपमेतदधिकरणद्वितीयसूत्रप्रमेयमुच्यते; तृती सूत्रप्रमेयमुत्तरार्धे । वाजिवाक्यं तावत् 'अपि चैवमेके' इति सूत्रखण्डविवक्षितं वाक्यम्; त्वन्तर्यामिब्राह्मणम् । तथाच तत्र प्राणजीवकथनं प्राणजीवाधिकरणतया तदन्यभूतं ब्रह्मेति ज्ञा नार्थम् । अयमस्कृष्टः परिहार इति तदर्थ इत्युक्तम् । तत् सिद्धम् एवमाद्यनुरोधाद 'जीवोपदेशः तच्छरीरकब्रह्मोपासनार्थं इत्यध्यवसीयते' इति वर्ण्यत इति ।

अत्रेदं बोध्यम् — श्रीभाष्ये द्वितीयसूत्रस्य जीवविशिष्टब्रह्मोपासनतात्पर्यकत्वं नैव भाषि तम् । प्राणशरीरकब्रह्मोपासनमिह प्रकरणे संभवतीति तेन सूत्रेण कथ्यत इति पुनर्भाष सूक्तिमापाततः पठन्तः सर्वे संमन्येरन् । वस्तुतः सूक्तिशैलीमवदधानैरिदं सुज्ञानम्, य द्वितीयसूत्रभाष्यम् "तत्परतया वर्णनीयानीति" इत्यन्तेन समाप्तम्; ततः, "प्रातर्दने ही त्यादि "इत्यत्राह" त्यन्तं तृतीयसूत्रावतरणभूतमिति । अतश्च प्राणशरीरकतया ब्रह्मोपासनम न भाष्यकृता द्वितीयसूत्रविवक्षिततया कण्ठोक्तम् । किन्तु तृतीयसूत्रोत्थानोपयोगिशङ्काक्रमुखे संभवमात्रेणाऽऽविष्कृतमित्येतदेव । जीवविशिष्टोपासनं तु नतराम् । तर्हि द्वितीयसूत्रप्रमे किमिति चेत् — न विशिष्टोपासनं वाक्यविवक्षितमिति तत्प्रमेयम्; किन्तु ब्रह्मपरत्व प्रकरणे निश्चितत्वात् जीवादिलिङ्गं श्रूयमाणमपि तच्छेषतया नेयमित्येतदेव । तदेव भाषितम "**तत्परतया वर्णनीयानी**" ति । अथ च **श्रुतप्रकाशिका**, "न तूपासनार्थत्वमप्यत्रा देष्टव्यमिति भावः" इति । अथ च, शेषतया वर्णनं नाम विशिष्टोपासनपरतया वर्णनान्नाधि

श्रीः

# कौषीतक्युपनिषदर्थसंग्रहकारिकाः



कौषीतकिब्राह्मणोपनिषद्दृग्वेदसंश्रिता ।
अध्यायेषु चतुर्ष्वत्र प्रथमे प्रतिपाद्यते ॥ १ ॥

पर्यङ्कविद्या यन्निष्ठ इष्टिकृच्चन्द्रलोकभाक् ।
अनुभूय फलं चन्द्रविसृष्टस्तत्त्वभाषणात् ॥ २ ॥

देवयानेन संप्राप्य ब्रह्मलोकमरं ह्रदम् ।
विरजां चातीत्य पञ्चशत्या चाप्सरसां तदा ॥ ३ ॥

प्रत्युद्गतः सोपहारं दिव्यरूपः परिष्कृतः ।
तिल्यवृक्षादिकं प्राप्य क्रमाद् गन्धादिशोभितः ॥ ४ ॥

द्वारपापद्वादासन्नब्रह्मस्थानोऽमितौजसि ।
पर्यङ्के ब्रह्मणा पृष्टः सत्यवाक् भोगसाम्यभाक् ॥ ५ ॥

मुख्यामुख्यप्राणचिन्ता द्वितीयाध्यायविस्तृता ।
प्रातर्दनी तृतीयेऽन्या परविद्या प्रकीर्तिता ॥ ६ ॥

इन्द्रेण त्वाष्ट्रहत्यादिकर्तृस्वान्तर्गतः परः ।
प्राणस्याप्यन्तरः प्राज्ञः आनन्दश्चाजरामृतः ॥ ७ ॥

सतोऽसतः कारयिता मुक्त्यै यत्रोपदिश्यते ।
तुर्ये बालाकिविद्योक्ता बृहदारण्यके स्थिता ॥ ८ ॥

॥ शुभमस्तु ॥

